# श्रीप्रताप चम्पू-काव्यम्





लेखकः—

श्री दिलीपदत्तशर्म्मोपाध्यायः।




सत्यप्रतिज्ञो रिपुलोककालः
सद्धर्म्मनिष्ठः श्रितसाधुपालः ।
सम्पूर्णसंसारलसत्प्रतापः
केषांन मान्योऽत्र भवान् प्रतापः ॥

॥ ॐ तत्सत् ॥



# श्री प्रतापचम्पूकाव्यम्



बुलन्दशहर प्रान्तान्तर्गत कृष्णपुरग्रामवास्तव्य

श्री दिलीपदत्त शर्मोपाध्यायेन

विनिर्मितम् प्रकाशितं च



ज्वालापुरीयमहाविद्यालयाचार्य्य श्री प० हरिदत्तशास्त्रिपञ्चतीर्थेन

संशोध्यभूमिकयाभूषितम् ।









प्रथमवारम् १००० } संवत १९९० { मूल्यम् १।)

प्राप्तिस्थानम्
पं० दिलीपदत्त शर्मा
मु० दतियाना
पो० गन्धौर
ज़िला बिजनौर।

## पाठकान् प्रतिकिमप्यावश्कंनिवेदम्।

कृतशोधेऽपिकाव्येस्मिन्पूर्वयन्त्रालयेऽभवन् संशोधकस्यदूरस्थस्थानवर्तित्वकारणात्।
पृष्ठादियोजनेप्याहोत्रुटयो या मनोऽप्रियाः ताः संशोध्याबुधैरतावद्रसच्छेदोनयद्भवेत्॥

न.हं कविः सिद्धरसोस्मि विज्ञः प्रज्ञा न मे वा प्रतिभाततत्त्वा।
अत्राऽपियत्किञ्चन वस्तुहृद्यं तत्कारणपूज्यगुरुप्रसादः॥

—लेखकः।

मुद्रक—
कुंवर पुत्तूसिंह भदौरिया,
भदावर प्रेस, ईश्वर-भवन,
दिल्ली।




श्रीभास्करानन्दपदाभिधेयाः
सद्बोधगम्यैकपदानुमेयाः ।
आदिश्यमांये गुरवोयदर्थं
दिवंगतादिव्यगुणाः सदर्थम् ॥१॥
समर्प्यतेतच्चरणेषुसैषा
चम्पूः प्रतापाद्भुतकीर्तिलेशा ॥
सम्पन्नरूपां त इमां कृतिंतां
संभाव्यमोदंसततंलभन्ताम् ॥२॥

इत्याशास्ते तदन्तेवासी—

## ॥ कृतज्ञता प्रकटनम् ॥

श्रीमान् सुधीनोहरिदत्तनामा
विद्वत्पुरः कीर्तितकीर्तिधामा ।
साहाय्यदाताऽत्रमहानुभावः
प्रशंसनीयोऽस्तिशुभस्वभावः ॥१॥
प्रूफादिशोधनविधौबुधसंमतीनां
यत्नोऽव्यधायिकलनेऽपिच येनभूरिः ।
तस्मैबुधायनिखिलागमपारगाय
किंवस्तुदेयमिति न स्फुरतिस्मृतौमे ॥२॥

---

॥ ॐ तत्सत् ॥

# प्रारम्भिकं वक्तव्यम्

ज्योतिस्तमोहरमलोचन गोचरं तज्जिह्वादुरासदरसं मधुनः प्रवाहम् ।
दूरे त्वचः पुलकबन्धिपरं प्रपद्ये, सारस्वतं किमपि कामहं रहस्यम् ॥

ननु विदितसाहित्यमर्म्मणां श्रीमदुपाध्यायकविपण्डितदिलीपदत्तशर्म्मणा अभिनन्दनीया श्रीराणाप्रताप चम्पूनाम्नीकृतिरेषा विहितसहृदयहृदयोल्लासै, भर्गबाहुरिवोच्छ्वासै र्भासमाना कचित्समासैः कचिद्व्यासैः कचिद्गद्यैः कचित्पद्यैश्चा-नवद्यै हृद्यैः सपद्येवार्थचोयरुचिरैरुल्लसिता कस्य न सचेतसः प्रमदसम्पदमादधीत । सहृदयाः ? अद्यत्वे वीर-कथाकीरकथेव जनयति श्रवसोरेवानन्दथुश्वयथुं न तु क्लीबकल्पानां वृथाधृतमानुष्यकाकलानां भारतीयानां सलेशं शौर्यशौटीर्यसमुन्मेषलेशम् । तथाच सत्यं वयम्—

नोधर्मायियतो न तत्र निरता नार्थाय येनेदृशाः,
कामोऽप्यर्थवतां तदर्थमपि नो मोक्षः क्वचित्कस्यचित् ।
तत्के नाम वयं वृथैव घटिता ज्ञातं पुनः कारणं,
जीवन्तोऽपि मृता इति प्रवदतां शब्दार्थ संसिद्धये ॥

इत्यस्य पद्यस्योदाहरणालाभदरिद्रतां दरिद्रयामः । तत्र इयं चम्पूः मानसक्लैव्याय वाजीकरणचूर्णायते । हृत्तन्त्री क्वाणाय कोणायते-तथाहि-कस्यन प्रह्वीभवति कर्णाध्वन्य ध्वन्ये सम्पन्न एव यवनजनदावदावतापे श्रीमहाराणाप्रतापे अनिच्छतोऽप्यधन्यस्य जघन्यस्य मूर्धामूर्धाभि षिक्तस्य, किं वा तस्यैव रागिणो द्वेषिणो वा जनिमन्मात्रस्य । तदनया वीरांकुरमङ्कुरयता सत्यसारल्यकृतसीरपतिसीरासु कैशोरकमनोवसुन्धरासु श्रीमदुपाध्यायेन नूनं सपल्लवोऽपि व्यधायि कष्टसहिष्णुताङ्कुरः, तद् यस्य ईदृशः सर्वतो विचित्य दोषै र्विहीनो गुणैरनूनो नायको निश्चितः सा कथन्न कमनीया चम्पूरमणी-मणि र्भर्तुः कतुरध्येतुश्च सौभाग्यं भावयेत्, किञ्च हिन्दीभाषाध्ययनं ह्येपणमिति मन्वानाः स्वचिरन्तनपुरुषपौरुषानभिज्ञा अपि विज्ञा गुडजिह्विकयानया इतिहासरस वर्त्मनि प्रवर्तिष्यन्ते। प्रतिपदं गोचरीचरीक्रियमाणेनानुप्रासप्रासेन प्राशिष्यते च तेषा-मरोचकितेति नः प्रत्याशंसा । तत्रप्रत्युच्छ्वासं वर्णनीयं वस्तु प्रेक्षावद्भिः स्वयमेव करणीकृत्य आलोचनीयम् । पदे पदे चा लोकनीया—

सर्वाशारुधि दग्धवीरुधि सदा सारङ्गबद्धक्रुधि ।
क्षामक्ष्मारुहि मन्दमुन्मधुलिहि स्वच्छन्दकुन्दद्रुहि ॥
शुष्यत्स्रोतसि भूरितप्तरजसि ज्वालायमानार्णसि ।
ग्रीष्मे मासि वनाद्वनं प्रति परिभ्रान्तिः प्रतापस्य सा ॥

यद्दोदयैव सहसा स्मृतिपथमुपारोहन्ति, तत्रभवतः कविताकामिनी पञ्चबाणस्य बाणस्य महाकवे रमूनि वचनामृतानि तथाप्यन्ये ते भूपतयः, अन्य एव चायम् । न्यक्कृतनृगनलनहुषादिरमृतमयः स्वामी । नास्याहङ्कार कालकूटविषदिग्धदुष्टा दृष्टयः । न गर्वगुरुगरलग्रहगदगद्गदागिरः । नातिस्मयोष्मापस्मारविस्मृतस्थैर्याणि स्थानकानि । नोद्दामदर्पदाहज्वरवेगविक्लवा विकाराः । नाभिमान महासन्निपातनिर्मिताङ्गभङ्गानि गतानि । न मदार्दितवक्रीकृतौष्ठनिष्ठ्यूतनिष्ठुराक्षराणि जल्पितानि । तथा च अस्य निर्मलेषु साधुषु रत्नबुद्धिर्न शिलाशकलेषु । मुक्ताधवलेषु गुणेषु प्रसाधनधीर्नाभरणभारेषु । दानवत्सु कर्मसु साधनश्रद्धा न करिकीटेषु । सर्वाभिसरे यशसि स्पृहाप्रीतिर्न जीवितजरत्तृणे । गृहीतकरास्वाशासु प्रसाधनताभियोगो न निजकलत्रचर्मपुत्रिकासु । गुणवति धनुषि सहायबुद्धिर्न पिण्डोपजीविनि सेवकजने । अपिच अस्य मित्रोपकरणमात्मा । भृत्योपकरणं प्रभुत्वम् । पण्डितोपकरणं वैदग्ध्यम् । बान्धवोपकरणं लक्ष्मीः । धर्मोपकरणमायुः । साहसोपकरणं शरीरम् । असिलतोपकरणं पृथिवी । विनोदोपकरणं राजकम् । प्रतापोपकरणं प्रतिपक्षः । नास्याल्पपुण्यैरवाप्यते सर्वातिशायिसुखरसप्रसूतिः पादपल्लवच्छाया, इति तदित्थं नूनं चम्पूरत्नमिदं स्वदेशानुरागाशुशुक्षणीङ्गालस्फुलिङ्ग सन्धुक्षणे पुण्यगन्धवहायिष्यते येन सायिष्यतेऽखिलहृदयगुहामध्यमध्यासीनं निबिडतमः पूर्वजवृत्तापरिज्ञानजन्मान्धकारः । किं बहुना ।

श्रीमानुपाध्याय पदप्रसिद्धः, सिद्धः कविः पाठनचातुरीमान् ।
श्रीमत्प्रतापस्य चरित्रलेखव्याजेन नैजीं रसनामपावीत् ॥
नैकानिकाव्यानि मनोविनोदहेतोर्व्यतानीदसुकोऽश्रमेण ।
किन्तानि सर्वार्यसमाजवर्गपाण्डित्यगर्वायनसन्ति दुर्गः ॥ इति ॥

प्राक्पुस्तकरत्नमिद मिन्द्रप्रस्थे नयावाजारस्थे आदित्ययन्त्रालये समारब्धमुद्रणमासीत्परं तत्रत्यतदात्वाध्यक्ष प्रमादवशाद् मुद्रणम्मुद्रणमलभत । ततो भदावर यन्त्रालयसंचालकपण्डितत्राबूरामशर्ममहोदयार्थनयातत्रैवोपक्रान्तमुद्रणंशिथिलगति चिरतात्राय पाठकवर्गौत्सुक्यापनोदनकारणतामासदिति खेदास्पदम् । भवतु यद्यार्यमिश्राः श्रममिमं प्रचारादिना फलेलिमं विधास्यन्ति तर्हि अशुद्धीः संशोध्य द्वितीयं मुद्रणमपि द्रुतमेव कलेलिमम्, इति निवेद्यते ।—

विदुषामाश्रवः -

आग्रहायणी पूर्णिमा
संवत् १९९०

विद्या भास्करः श्री हरिदत्त शास्त्री
न्याय-व्याकरण वेदादितीर्थः,
ज्वालापुरीय महाविद्यालयस्याचार्यः ।

# सम्मतयः

## कतिपय विद्वदग्रेसराणामभि ाया: ।

**निखिलतन्त्रापरतन्त्र गुरुवर श्री १०८ मत्काशीनाथशास्त्रिणामाशयः—**

अथेदं विदितमस्तु सुरभारती रतिमद्भ्यो विपश्चिद्भ्योयदियं प्रियोपाध्याय पण्डितदिलीपदत्तशर्मविनिर्मिता विश्वविदितचराप्रतिमपराक्रमवीरधुरीणपुण्यश्लोकमहाराणा ।तापसिंहचरितवर्णनपरा चम्पूः संस्कृतवागाटवीप्रविविक्षूणां छात्राणां सविशेष मुपकरिष्यति समाप्लावयिष्यति चामन्दानन्दसंवलितेन वीररसावसेकेन तदन्तःकरणानीति प्रचारमर्हतीति सम्मनुते—

सम्प्रति काशी वासी

काशीनाथशास्त्री

इद मनुप्रासबहुलं प्रतापचम्पूकाव्य मनेककार्यव्यापृतेनापि मयास्थलेस्थले विलोकितममन्दमानन्दमजीजनत् । एतत्प्रेषणकृते धन्यवादार्हा भवन्तः । श्रीमते उपाध्यायमहोदयाय मेनतिर्वाच्या, सविस्तरं पुनर्लिलिखिषामि । इति ।

किशोरीदासवाजपेयी शास्त्री

( कनखलस्थः )

श्रीलोपाध्यायपण्डितदिलीपदत्तशर्मप्रणीता प्रतापचम्पू र्नलचम्पूरिवकस्य मनो न रञ्जयति । संस्कृतवाङ्मयेऽद्यत्वे न दृश्यते एतादृशमैतिहासिकं गद्यपद्यमय काव्यम् । एतत्पूर्त्तिनिमित्तं श्री दिलीपदत्तोपाध्यायेभ्यः हृदयान्तस्तलोद्गतान् भूरिशो धन्यवादान् दद्मः । एतादृशेन काव्येन संस्कृतमधिजिगांसमानानां वटूनां महानुपकारः स्यादिति ।

श्री नरदेव शास्त्री, वेदतीर्थः ।

श्रीमन्माननीयविद्वद्वरकविवर श्रीलपण्डितदिलीपदत्तशर्मोपाध्यायानां कृतिरेषाऽदोषा प्रतापचम्पूःकम्पूज्यप्राज्यगुणराणाप्रतापसिंहचरितपठनलालसमानसं न समुत्सुकयेत्सचेतसम् । अह मिमामामूलचूलमलुलुकं निरचैषञ्चास्या वर्णिवर्गोपकारबद्धकत्त्वम् । चम्पूरत्नमदः सहैवदेशाभिमानाङ्कुरणेन नवनवशब्द बोधनपुरस्सरं ज्ञानगरिमाणमपि जनयिष्यति लोलालकानां बालकाना मितिमे सर्ग इतियेदयते

विद्याभास्करः श्री विश्वनाथ शास्त्री,

न्याय-व्याकरणतीर्थः

गुरुकुलभैंसवालस्याचार्यः ।

श्रीमन्माननीयविद्वद्धौरेयपण्डितकविदिलीपदत्तशर्मोपाध्यायनिर्मितं यत्र तत्र स्वर्लोकललामायमानप्रातःस्मरणीयपितृचरण श्री ६ मत्पूज्यपण्डितपद्मसिंह शर्मभिर्भूरि भूरि प्रशंसितं परम्परया मल्लोचनगोचरतां गतं चम्पूरत्नमिदं प्रत्नशौर्यप्रचारणजागरूकयत्नं कविवरोपाध्यायशिल्पिप्रकल्पितं कस्य न रत्नपरीक्षाशेमुषीचणस्य विद्यावदातान्तःकरणस्य मनोमोदं प्रसह्य समुत्पादयेत्। किञ्च न केवलमिदं प्रतापचरितं पारतन्त्र्यक्ष्वेडजडीकृतपूर्वजगौरवस्मरणासृग्वक्षांसि नवप्रवालसमषड्गुन्नातचेतांस्येव समुज्जीवयिष्यति प्रत्युत शास्त्राम्बुधिमग्नानां लोकव्यवहारनिःसंज्ञानां विज्ञानामपि कृते जीवातविष्यतीति सम्यगाशेते।

**विद्याभास्करः काशीनाथ शर्मा काव्यतीर्थः**
**महाविद्यालय विद्यासभा**
मन्त्री
**( स्थानापन्न—व्यवस्थापकश्च )**

श्रीयुत पूज्योपाध्यायचरणैरुपकल्पितं "श्रीप्रतापचम्पूकाव्यम्" ममतथानन्दसन्दोहमुपजनयतियथा महाविद्यालय (University) सञ्चालका एतस्य चम्पूरत्नस्य परीक्षासु पाठ्यत्वेन निर्धार्यत्वे मया संचोधन्ते। ते ह्येतेन महतीं छात्राणामादिमरसाध्ययनोपजातां हानिमपाकरिष्यन्तीति दृढंप्रेत्यति—

**कृपाशङ्कर शास्त्री**
शङ्करौषधालयाध्यक्षः
( गाजियाबादवासी )

उपाध्यायानामिदं पुस्तकं चारुतरमितिनिर्धारयति—

**सांख्यतीर्थो देवेन्द्रनाथ शास्त्री,**
गुरुकुल सिकन्द्राबादस्याचार्य्योमुख्यधिष्ठाता च।

I have gone through in full the 'PRATAP CHAMPU' written by Pt. Dilip Datt Sharma, the well known Sanskrit Poet. The Vocabulary and the subject are well chosen. The Composition of Such books in poetry are an encouragement to Sanskrit literature. The book will prove highly use full to students keen on the study of Sanskrit.

It is hoped that this book will form an important and rare part of modern Sanskrit literature.

**Narayan Rao shastri.**
**Shankar Rao M. A.**
Delhi.



यः काव्यकायं निरमात् कवीन्द्रः,
स एष षट्शास्त्रवनीहरीन्द्रः ।
श्रीमानुपाध्यायपदोत्थभानः,
दिलीपदत्तोऽस्ति विराजमानः ॥

( श्री काशीनाथ शर्मा काव्यतीर्थः )

Bhadawar Press, Delhi.



तत्सत्परमात्मनेनमः

# ❋ अथ श्री प्रताप चम्पू काव्यम् ❋

## प्रथमो निश्वासः ।

विवर्त्तमानं जगदेक खण्डेऽप्यखण्डभूतं यदचिन्त्यसत्त्वम् ।
स्वात्मैकभानं निगमैकमानं, वन्दामहे तच्चितिरूपतत्त्वम् ॥१॥
यतः परं तद् विषयत्त्वमेति, विश्वं तथा कङ्कणवद् विभाति ।
तां भुक्ति मुक्ति प्रतिपत्ति हेतुं, सरस्वतीं प्राञ्जलिरानतोऽस्मि ॥२॥
लोकोत्तरानेकगुणाभिरामाः, काष्ठान्तकान्तोरुयशोवितानाः ।
छात्तालयाः श्रीहरिनाथताताः, श्रीकाशिनाथा गुरुवो जयन्ति ॥३॥

वेदोक्त धर्म रसिकं यमिनां वरिष्ठं,
विद्या-विलास-मनसं भुवनप्रतिष्ठम् ।
श्रीभास्करं गुरुवरं प्रणिपत्य भक्त्या,
तद्देशनात्किमपि कौतुकमातनोमि ॥४॥
सन्त्यत्र मत्सरंचिता, रुचितात्म बन्धाः,
निर्बन्धबन्धननिबन्धकलावपीडाः ।
व्रीडाविहीनमनसो, विधिहीनवृत्ता,
वृत्ताव बोधनरुचिः कथमस्तु तेषाम् ॥५॥

सन्नायकवती माला, कामिनी कविता तथा, ।
शोभते कुरुते चापि, कमप्यानन्दनन्दनम् ॥ ६ ॥
प्रसन्न वर्णा सुगुणा सुवृत्ता, सन्तापहन्त्रीसरसागभीरा ।
सत्पुष्पमाला भणितिःकवेश्च कण्ठे सतांगौरवमादधाति॥७॥
ये कौशिका इव सदा विविधप्रलापा,
दोषोत्सवा विषमदृष्टिजुषोऽत्रकेचित ।
ते दुर्जनाः परकृतिप्रतिबोधयोधाः,
किंनो विभोनव विभूति भुजो भवन्ति॥ ८ ॥
अकाव्य कर्त्ताऽपि रसानुभावी, व्यालोकि लोके प्रतिभाप्रभावी ।
किं पाक कर्त्तैव रसं तदीयं, जानाति नाऽन्यो रसना सनाथः॥९॥
कविता वनिता तुल्ये ये वदन्ति मनीषिणः ।
मन्ये नैवान्तरज्ञास्ते पक्षपातैकदृष्टयः ॥ १० ॥
गुणवत्योस्तयोर्मध्ये महदाख्यातमन्तरम् ।
सरसा स्वाद्य मानाऽऽद्या विरसा चरमा यतः ॥११॥
संवेशहृत्स्वास्थ्य विनाशकारिणी, शास्त्रान्तराभ्यासरुचिप्रतारिणी।
सुरेव चेतः प्रमद प्रसारिणी,यागादिसा किंकवितान हारिणी॥१२॥
काव्यं नवीनस्य कवेर्नहृद्यं, पुरातनस्यैव तथाऽनवद्यम् ।
स्थानेन वैतद्धि मनः श्रुतिर्वा, तत्सौष्ठवेमानमुदाहरन्ति ॥१३॥
किमस्ति तद्वस्तु न यन्निबद्धं, सुचारु रूपं कविभिर्जरद्भिः ।
ऐदंयुगीना अपि तत्र केचिच्, चमत्कृतिं कांचन भावयन्ति ॥१४॥
सूक्ते रसं चाऽपि रसज्ञएव, ज्ञातुं समर्थः प्रतिपन्नबुद्धिः ।
काचेमणौ यो निहितो विशेषस्तत्तत्त्व विद्व्यक्तिविशेषएव॥१५॥
कान्तेव सुन्दरवपुः कवितास्ति धन्या,
भावैरसं प्रकटन्त्यतुलोरुकान्तिः ।
प्रौढान पदावलिभिरेव विमोहयन्ती,
सालङ्कृतिर्विदुषि मुख्य रसं सृजन्ती ॥१६॥
तन्त्रेऽल्प बोधानपि सूक्ति विज्ञान, संप्राप्य मोदं कवयो लभन्ते ।
गुणाव बोधो निकषोपले किं, नजायते स्वर्णशलाकिकायाः ॥१७॥

काव्यं न ये कर्तुमपि क्षमन्ते, मूढेश्वराः सूक्तिषु न क्रमन्ते ।
तेषां पुरः काव्यकथाप्रसङ्गः, किं मृत्युदुःखादतिरिच्यतेनो ॥१८॥
काव्यं मदीयं सरसं न वेति, न साम्प्रतं वक्तुमिदं मयैव ।
सर्वैः परीक्ष्ये विषयेऽत्रकिंनो, विनिर्णयो मे विदुषां हसाय ॥१९॥
असुन्दरं चाऽपि निजं सुसुन्दरं, पदं समाख्याति जनोहठेन ।
अतः परीक्ष्यैव महानुभावै, र्विभावनीयं खलु तत्स्वरूपम् ॥१०॥
काव्यं तथा रत्न मिदं जगत्यां,द्वयं समं भाति मदीय बुद्धौ ।
यथा यथाऽमुष्य विमृष्टि योगस्तथा तथायाति मनोहरत्त्वम् ॥२१॥
गद्येरुचिंकश्चन नामधत्ते, पद्येऽनवद्येऽथ परः सुहृद्ये ।
तयोर्द्वयोस्तोषकृतेकृतोऽयं, चम्पूकृतौ तन्मयका प्रयत्नः ॥२२॥
श्रीमत्प्रतापस्य गुणैः प्रणुन्नो, बध्नामिबन्धं गुरुर्सनि देशात् ।
नस्युः पुराणाः कवयोऽत्र रुष्टाः, क्व हेलि[1] खद्योतकयोर्विवादः ॥२३॥
चम्पूं नवीनामभिवीक्ष्य कामं, रुषं मुदं चाऽपिजना दधीरन् ।
खलत्त्व सौजन्य विवेक एषां, ताभ्यां न किं व्यक्ततरम्प्रतीतः॥२४॥
पुराणात्मवृत्तस्मरणं हिताय, काव्यं तथा ऽलौकिकसंमदाय ।
इत्यस्ति येषांहृदये विचारस्तेषां सतामत्र धृतो ऽधिकारः ॥ २५ ॥

सत्येतिवृत्तपरिशीलन मेवजाते,
रुत्थान कारण मनन्त गुणाऽभियोगात ।
इत्याकलय्य कविता रसिकान्तरङ्गाः,
सन्तोऽत्र किं नहि समादरदृष्टिरक्ताः ॥२६॥

स्वजातिधर्मोद्भवभूमिरक्षां, प्राणव्ययेनाऽपि वितन्वतेये ।
त एव धन्याः पुरुषा जगत्यां, कल्पान्तर स्थायि यशो लभन्ते॥२७॥
यस्तद्दशां हीनतरां विलोक्याप्याहो जनः सुस्थमना ध्रियेत ।
स किंजडः क्लीब कलत्र जोवा, मनस्विता यत्र पदं न धत्ते ॥२८॥

---

१—हेलिः सूर्य्यः ।

यो देशजातिसुकृताऽवनलग्नचित्तः,
स्वार्थोपपत्तिरहितः परमार्थवित्तः।
तत्कीर्तिकीर्तनपरा अपि पुण्यभाजः,
किनो भवन्ति गुणिनामधिराजराजः ॥२९॥

अस्ति किल सकलर्त्तु सुखं विश्वाश्चर्यचर्य्याकारि प्रमुखम् चतुर्वर्ग प्राप्ति साधनोपयुक्तं वैदिकलोकनिवाससौभाग्यसंयुक्तम् । काष्ठान्तकान्त प्रतिष्ठं सम्पूर्णवर्णवरिष्ठम्, निरवद्यविद्यविद्वत्प्रकर्षं भारताभिधं वर्षम् । यत्र सदागमा इव सुकृतप्रसूतयः अवरोधभूमयइव महर्षीविभूतयः, संगीतशाला इव सगन्धर्वमालाः, यज्ञभूमयइवसमहावीराः, वनराजय इव सनागाः, सांख्या इव प्रधानपुरुषोपेताः, वैनाशिका इव अदैव मातृकाः, आरामाइव सुमनो भूयिष्ठाः, शैवा इव धृतविभूतयः, वैष्णवा इव प्रतिपन्नहरिभूमयः, महानसा इव विविधसुरभिपाकसंवलिताः, अमृतदीधितय इव लोचनलोभनीयाः शान्त विग्रहाश्च। भानु भानव इव पर ललाटन्तपा जाड्य हराश्च, वसन्त दिवसा इव विकसितसिद्धार्था बहुकौतुक प्रसंगाश्च, ग्रीष्मदिवसा इव अत्यायताः सुख मज्जनाश्च, प्रावृष इव वृष्टि संपातसुभगाः सशाद्वलाश्च,शरत्समया इव प्रचण्डमित्र मण्डलाः सहंसप्रचाराश्च, हेमन्तश्रिय इव बहुभोगक्षमाः सन्तापहराश्च, शिशिरदिवसा इव समुन्नत्युन्मुखाः स्वर्गवसतय इवसकवयो बहुविधविबुधाश्च सर्वकालसमुचितविश्रामा ग्रामाः सन्ति।

अस्ति तदन्तरालनिचोलितपरमपवित्रतीर्थभूभूषितः, सच्छास्त्र परायण-विमलान्तः करणभूमिरेवसमधिष्ठितः, धनधान्यसमर्जनव्यापृतिचणश्रेष्ठिजन-विभवनिधानभूमिः पुण्य भूमिर्नाम सुकृत सम्पदोजनपदः।

गङ्गादयो यत्र पवित्रनद्यः, शिलोच्चयाश्चारुशिलोच्चयाश्च ।
हिमालयाद्या भुवनाभिवाद्याः, सन्ति प्रभूता सुषमोष्टिभूताः॥३०।
संरक्षितुं दैत्यकुलात्कृपालुः, श्री माधवो भूमिमनेकवारान ।
यस्मिन् सदेवः कलितावतार-श्चक्रे स्वयं जिष्णुविलास वारान्॥३१
वाचस्पतिस्पर्द्धि बुधालिमण्डितः,संगीतसाहित्य कलाभिनन्दितः।
षडङ्ग युग्वेदरहः करण्डितः, केषांनदेशोऽयमिहास्ति वन्दितः॥३३॥

अनेकतीर्थानि महत्त्वमञ्जि, राजन्ति यस्मिन् कृतिसंमदानि ।
प्रकाश योगात्तिमिरच्छटेव, नश्यत्यहो यल्लघुपातकालिः ॥ ३३ ॥
यश्चदेशः—अध्यात्मविद्याध्ययनैकशाला; वर्णाश्रमाचारसुरत्नमाला।
मनस्विताधाम दयानिधानं, विराजते सर्वगुणप्रधानम् ॥ ३४ ॥
योगेऽथ सांख्ये पदभञ्जनेवा[1], न्यायेतथा व्याकरणप्रबोधे ।
वेदान्ततन्त्रे समितौ तथैव, सर्वस्य लोकस्य गुरुर्गरीयान ॥ ३५ ॥
अस्ति प्रतीच्यां दिशि मेदपाट नाम्ना निरूढो विषयो विशालः ।
संरद्यः प्राक्तनमानमय्या, द्युन्मस्तकं भारतमातनोति ॥ ३६ ॥
लोकोत्तरं तत्र विराज मानं, सुजन्यराजन्यनिवासधन्यम् ।
चित्तोडसंज्ञं नयनाभिराम, जागर्ति दुर्गं प्रतिमाविरामम् ॥३७॥
प्रत्यर्थिवृन्दोन्मथनानुरागः, शूराग्रगः सूर्य्यकुलावतंसः ।
गोविप्ररक्षारसिको दयालु, धर्म्ये विधौ जातु न संशयालुः ॥३८॥
संग्रामभूभावितभव्यकीर्तिः, स्वजातिसम्मानपरो यशस्वी ।
सल्लक्षणस्तत्र महीमहेन्द्रः, कर्तव्यसंपालनवीततन्द्रः ॥ ३९ ॥
उवास साङ्गाभिधभूमिपालः, कालोद्विषां सज्जनदीनलालः ।
सत्यप्रियो योऽनुपलं प्रजानां, कल्याणकामोयततेरम धन्यः ॥४०॥
यशो यदीयं शरदिन्दुवर्णं, श्यामानि चक्रे द्विषदाननानि ।
रणे विराजन्नपि यस्य खड्गः, सपत्नयोषिद्वलयान्यभाङ्क्षीत।४१।
कदाचिदेतौ रविवह्निदेवौ, महाप्रतापा अपि सद्य रूपौ ।
यस्य प्रतापस्तु सदैक रूपः, सन्तापयामास विरोधिवृन्दम् ॥४२॥
उद्दण्डदण्डद्योचतबाहुदण्डं, वैतण्डकारातिकुलप्रचण्डम् ।
तं दैत्यवैतण्डविमर्दसिंहं, संग्रामसिंह कवयो वदन्ति ॥ ४३ ॥

यश्च दुर्गासक्तोऽपि कुमार जनको ऽपि वामलोचनोऽपि विजयाचितोऽपि न खण्डपर्शुः भानुवंशोत्पन्नोऽपि सुमित्रानन्दनोऽपि मेघनादशत्रुनाशनोऽपि न लक्ष्मणः, दुःशासनविध्वंसरसोऽपि प्रभञ्जन जनकोऽपि महाबलोऽपि नवृकोदरः, धर्मप्रसूतिरपि पुण्य संगरोऽपि परशल्यहरोऽपि न प्रथम पाण्डवः, अदशाननोऽपि मेघनादकर्त्ता, अरामोऽपि दूषण-संहर्त्ता, अकालीदासोऽपि कुमारसंभव प्रणेता

(१) "निरुक्तं पदभञ्जनम्.' इति हेमचन्द्रः ।

भभव भूतिरपि महावीर चरित विधाता, अनागोऽपि संस्तुत चन्द्रापीड:, अभारविरपि किरात सङ्कलयिता

**तेजस्वितायां रविरेव साक्षात् मनस्वितायां सुरनायकश्रीः ।**
**प्रमोदसंपत्तिविधौ शशाङ्कः, क्षमाक्षमायां दमनेयमोयः ॥ ४४ ॥**

तस्यच सुजन पदे जन पदे। सकलकला कलाप पङ्गमा: सुकृति कृति हृदयङ्गमसङ्गमा:, शिष्टाचार विचार धारण शीला:, परोपकार सम्पादन विगत प्रमीला:, परम तत्त्व विवेचन लब्धवर्णा अग्निवर्णा आसन्। नाना विध विद्याध्ययन दक्षा:, समिति सादित स्वल्पेतर प्रबल वैरिपक्षा:' स्वजातिकुलधर्मगौरव रक्षण दीक्षा:, कलित सच्छास्त्र सिद्धान्त समीक्षा:, समुत्तीर्ण नय समय परीक्षा: गो विप्र सेवा तत्परा: क्षत्रियवराश्च बभूवुः । तथा वर्त्ता तन्त्र विज्ञानाऽपरतन्त्रा:, देशदेशान्तर व्यापृति समुद्योग स्वतन्त्रा ।

सुकृतोपार्जित भूरि विभूतय: सकलिता ऽनाथ समूतय: प्रतिकम भूसुरवर समादेश्या वैश्या अभूवन् किञ्च स्वामि सेवा व्रतधारिण: तदनुसार सदाकाङ्क्षकारिण: प्रमादादि दोष रहिता: सत्यादि गुण सहिता:, धृत संल्लक्षणमुद्रा: शूद्राश्च समजनिषत । तदानींच तत्रवर्ण साङ्कर्यं चित्रेषु कुटिनाकुलकेषु द्विजिह्वताभुजङ्गमेषु, निबिडबन्ध: काव्येषु विग्रह: समस्तवाक्येषु, गुणवृद्धि निषेध प्रसङ्गो व्याकृत ग्रन्थेषु, जडताजलेषु, स्नेह हीनता सिकतादिषु, प्रकम्पा वायुषु, उत्पाता पतत्रिषु, अध: पात उदञ्चनेषु, शृङ्खला योग: कवाटेषु, विषमता पर्वतेषु, समदन क्षमत्वं खण्डचूर्णेषु, मुखरता नूपुरेषु, सन्ताप शालिता ग्रीष्म दिवसेषु, कोशशून्यताचन्द्रहासेषु, चञ्चलता खञ्जरीटेषु, वञ्चकता शृगालेषु, कुलद्वेषो महिषेषु, वियोगश्चक्रवाकेषु, करुण ध्वनि: क्रौञ्चेषु, उन्मदतागजेषु, विकरालता सिंहेषु, गेहेशूरता सारमेयेषु, पक्षक्षप: पुत्तिकाकुलेषु, आसीन्न प्रजासु।

**स्वर्गं सुरेन्द्रोवमहीं महीन्द्रः, संप्रोथितारातिगणो वितन्द्रः ।**
**संग्रामसिंहोऽथ तथा शशास, लोकः समोयत्सुख मध्युवास ॥४५॥**
**संग्राम कण्डूत्यपनोदकामः, दिल्लीश्वरो म्लेच्छजनाभिरामः ।**
**संभूयतस्याननसंमुखीनः, वैलक्ष्यलक्ष्यः समभूत्सुदीनः ॥ ४६ ॥**
**सपत्ननाशोद्यतचन्द्रहासः , सभ्यप्रियः पोषितदीनदासः ।**
**स वीरवर्यो निरवद्यचर्य्यः, स्वर्यः [1]सतां कस्यन वन्दनीयः॥४७॥**

[1] रु रुन्तु आर्य्य: स्वामि वैश्य योरिति पाणिनि:—

शान्तोऽपि दुर्दान्तरिपुप्रहारी, तस्यात्मजोऽथोदयनामधारी ।
तदासनसोढमहाविषादः, सनाभियुग्मोत्तरमाससाद ॥ ४८ ॥

अशक्नुवन् सोढुमदः प्रतापं, समत्सरोऽकब्बरपातसाहः ।
कृशानुरूपेण पतङ्गरूपः, संग्राममारब्धुमना बभूव ॥ ४९ ॥

संग्राम सिंहस्य सुतो ऽपिधीरः, प्रत्यर्थिनस्तस्य बलावलेपम् ।
सोऽनन्त तेजा भट लोकसारः, कथावशेषं तरसा चकार ॥५०॥

दिल्लीपतिर्दुर्गति जन्य दुःखं, सोऽभूत पूर्वं परिसंजिहीर्षुः ।
तन्मण्डले हन्त कृतोरुजापः, स्वकूटनीतिं सफलीचकार ॥५१ ॥

तयोर्जिगीष्वोः कृतहृत्प्रकम्प, मुत्तालमुन्नर्तितभूततालम् ।
असंख्य मुण्डार्चित चण्डिचण्डं,जज्ञेऽथजन्यं सुरभावधन्यम् ॥५२॥

युद्धे ऽधिकालस्थिति केति हानिं, संभाव्यलोकस्य दयालुचित्तः ।
सभूमिपालः सचिवानुमत्या, ततः प्रतस्थे परया विरक्त्या ॥५३॥

सराजधानीं परिहाय शान्तः, सभूमिपोहन्त यदा प्रयातः ।
तदैव तस्यां यवना विसिंहे, तत्कन्दरे वञ्चकवत्प्रणेदुः ॥५४॥

नृपस्य संग्रामनिवृत्तिरेषा, पापस्वरूपेति भटा अनेके ।
तच्छोधनायैव रणाग्निकुण्डे, हुत्वा शरीराणि सुरत्वमापुः ॥५५॥

प्रतापसिंहस्तु महाप्रतापस्तदा, पितृव्यस्य हि दर्शनेच्छुः ।
नेपाल देशान् प्रतियेन यातो, मन्ये ततोम्लेच्छजयो बभूव ॥५६॥

प्रतापसिंहारिकुलप्रतापः करिष्यते कर्म सुदारुणंयत् ।
तथैव चान्यैरपितत्सहोदरै, र्युद्धप्रियै श्चण्डबलैःकुमारैः ॥५७॥

अतो ममान्ते जगमल्ल नामा, राजा भवेल्लोक सुशान्ति कामः ।
सुतः कनीयानिति मन्त्रिवर्गं, मादिश्य भूपोऽजरतामवाप ॥५८॥

तंपश्चर्विशंनृपतेः कुमारं, कनिष्ठमप्यात्मविभोर्निदेशाद् ।
अथो स राज्येऽभिषिषेच मुग्धः, किंनो जनोनऽर्थ ततिं तनोति ॥५९॥

अपरबन्धुकुलं विनिरीक्ष्यतद् विधिहतं लघुराज्यसमर्पणम् ।
समभिषेच यदग्रजमेवतं, प्रतपनं तपनानलसंनिभम् ॥ ६० ॥

अथ विरक्ति भाजा राजाऽऽर्बुद पर्वतसविधे सकलसुमनोज्ञसुविधे सरत्नगणदुर्गमतयाऽनाशङ्कितविपदे यत्र पदेनयनप्रमाद: प्रासादो निर्मापितस्तन्न वस्तु न रुचिं बबन्ध सकलमपि राजकुलमिति समुचित तर साधनग्रामे रमणीय दृश्याभिरामे गोगन्दग्रामे समेत्यन्यवात्सीत्, तत्रैव शत्रुभूपालमद-मर्दन-दीक्षित-कराल-करवाल:, सप्रतापो नाममहीपाल: प्राज्यंतन्मेदपाटराज्यं प्राप्याऽपि म्लेच्छ राज स्वायत्ती कृत निजपूर्वपुरुषदिग्विजयतत्त्वाचन्द्रसंभृतं चित्तोडाभिधं दुर्गं कथं मया पुनरपि निघ्नीकर्त्तव्यमिति दिवानिशं चेतसि प्रज्वलितमन्युहिरण्य-रेतसि चिन्ताभारं बभार । तथाहि—

कालस्थलीलायितमिति यद् यवनाय सम्बन्ध दूषिता: तद्दत्तानेको-पाधिभूषिता:, केचनमद् शीया अपि अधन्या राजन्या विदेशीया इव स्वार्थ-लोलुपतया मयि प्रकटित वैरा: समजनिषत । अयमपर: क्षते प्रहारो यद् असौ यवनाधिपदत्तोन्नतपदाभिलाषी महाविलासी कुलकीर्तिविलोपननागर: सागर-स्तथा सम्भावितसमराङ्गणबहुशक्ति: स्वकुलगौरवरक्षणविरक्ति: सन्तोषित यवनतदनुज: सोऽय मदनुज: शक्तिसिंहोऽपि निष्कारणमेव मत्त इव मत्तो वियुज्य वैरायमाण शक्ति विवर्धनपर: पर: संजात:, इति चिरमनुतप्य मधीर: सूर्य वंश्यभूमि जानिहीर: पूर्वजवीरपराक्रमपुण्यस्मृतिभरितान्तरङ्ग:, सम्पा-दितानेक वारशत्रुवारणभङ्ग: सप्रतापसिंह: सिंह इव कोपकषायितदृष्टि: किमपिदारुणं कर्म चिकीर्षुरिव सिंहासनस्थोऽपि मनसेतस्ततो बभ्रामेव—

सम्मन्त्रिणे भाव विदोऽथ तस्य, चिन्तातुरत्वं निज भूमि पस्य ।
विलोक्य धीरान्यगदन् सुवीरा,कृत्वादृशो नाथ भवन्त्यधीरा:।६१।
बधान धैर्यं ननुधीर रत्न, यत्नप्रिय: स्यादुदयायभूय: ।
एतेवयं चाऽपि सदा भुजिष्या:, सज्जानिदेशे भवदेकवश्या: ॥६२॥
निशम्य तेषां वचनं विचक्षण:, स भूमिपालो विदितार्य्य लक्षण: ।
प्रसन्नचेता रविवंशयनेता, निजाभि संधिं न्यगदीत्स सन्धिम् ६३

तथाहि – अयि सदात्मकल्याणविधानुबद्धानुरागा: सचिवमहाभागा: किमविदितं तत्र भवतां विचारवतां भवतां मज्जन्म भूमि श्चित्तौड राज धानीयवन नायकेन वशीकृत्य शोचनीय दशां नीता वैधव्यपरीता वनितेव नि:श्रीकतां बिभर्त्ति । तत्पराधीनां मत्पूर्वजा कलितसम्पद्विशेषहीनां तां विलोकयतो मे नितरां विषीदति चेत:, अत: ।

यावत्तु शत्रुनिवहं दुर्भावभाजं,
नैर्घृण्यकर्मकुशलं मदमत्तराजम् ।
निष्कालयेन निजजन्मभुवो बलेन,
तावन्मनः प्रशमयामि बुधानुकेन ॥ ६४ ॥
आगत्य भारतमहीं महनीयवृत्ता,
वृत्तागमा भुवनभव्यविधौ प्रवृत्ताः ।
भूमीश्वरा अपि हहो निकृता बुधाग्रैः,
स्थीयेततैर्मम पुरोऽपि कथं समाग्रैः ॥६५॥
विश्वोपकारकरणार्पितजीवितानां,
नैर्घृण्यदोषबलिता इह गोकुलानाम् ।
अत्याहितेऽपि न मनाक् करुणां व्रजन्ति,
हा हन्तते ऽपि सुचिरं ससुखं वसन्ति ॥६६॥
निर्लज्जता परवशा वशिता विहीना,
दीनोपपीडनधियो दुर्वृत्तिलीनाः ।
अत्याचरन्ति यदहो अबलाजनेऽपि,
तत्सोढुमुन्नत हृदः प्रभवो न केऽपि ।६७॥
यज्जातिकारणवशादवशा प्रविष्टा,
शिष्टानलं भुवनदिव्यगुणप्रतिष्ठा ।
सा पद्मिनी शुभमतिः प्रपितामहीनः,
सह्य कथं तदपराधलवोऽपि हीनः ॥ ६८ ॥
भग्नानि हन्त बहुशः सुमनोहराणि,
सेष्यैः सुमन्दधिषणैः सुरमन्दिराणि ।
यैस्ते परे परमतत्त्वसमृद्धिरङ्काः,
किंस्युः स्थितेऽपिमयि शस्त्रधरे विशङ्काः।६९।
देहेस्थितिं दधतियावदथा ऽसवोऽपि,
शस्त्र प्रचालन पटुश्च ममास्ति पाणिः ।
तावद् विशुद्धमतयः सचिवाः परेषां,
गर्वं न हन्मि ममनामधिगस्तुतार्हि ॥७०॥

आर्य्योपपीडन महो प्रथिताऽस्ति रीतिः,
येषांनयेऽपरसमृद्धि हृतौ न भीतिः।
संगत्य तैः किमुमयाऽपि परैरिवाऽद्य,
किं शान्तये ऽमलकुलं नुकलङ्कनीयम् ॥७१॥

अथनीतिशास्त्रपरिशीलनसमेधितधिषणाः, समयोचितविचारविधि निपुणाः, समाश्रितसत्यास्ते तदामात्याः, सूर्य्य कुलावतंसस्य वीर धुरि जेगीयमान-शौर्य्यादिगुणगणप्रशंसस्य दृढव्रतस्य तस्य वचनमुपश्रुत्य कृताञ्जलिपुटं तं प्रति वक्तुमुप चक्रमिरे, अयि साधु कृपणैकत्रातः, प्रभो ! अन्नदातः।

अरातयो यद् बत भारते ऽद्य, कुर्वन्ति दुष्कर्म शठाः प्रसह्य।
तन्नास्तिकिं सभ्य समाजमध्ये, कल्पान्तरस्थायिकलङ्क एव ॥७२॥
भवादृशा जातु न तादृशानां, कृतं निकारं सहितुं समर्थाः।
तथा न चेन्नाथ मनस्वितायाः, समाश्रयः कुत्र भवेद्दूराक्याः॥७३॥

परमयं कूटनीतिप्रयोगकुशलः सदाचारतण्डुलकण्डनमुसलः, भवत्स्वा-धीनताविलोकनसंजातप्रभूतमनोदाहः यवनपादशाहः, दुःशामन इव दुःशासनः भोगीव महाभोग; कीचक इव प्रभञ्जनरणः, अग इव द्विजिह्व समाकुलः, वात संघात इव रजोबहुलः, चकोर इव दोषाकरप्रियः, बक इवाऽऽकारसुन्दरः, कण्टक इवबहु मर्मच्छेदी, चिल्लाभ इव परसस्वाकर्षण शीलः, अनङ्ग इव रतिप्रियः, शैलूष इव बहुभमिकाग्रहणचतुरः, कंस इव वासुदेवापमन्ता, हिरण्यकशिपुरिव भक्तप्रह्लादविद्वेषी, धृतराष्ट्र इव दुर्योधनप्रसूतिः, किरात इव हरिणहृदय कम्पनः, श्येन इव विपक्षरक्तशामनः, कपोत इव सुदुर्गोत्पातः अनन्तगजतुरंग पदादिप्रबलबलसनाथः, असंख्यानशातघ्नीनालिकाकौक्षेयक प्रभृति प्रहरण विहिताऽहितव्रातप्रमाथः, ये च क्षात्रधर्मधुरन्धराः, प्राक्रमातिशयविडम्बित पुरन्दराः, सदा समुन्नतकन्धरा महामनस्वितापेकाशा भवत्सँकाशाः, शूरा संग्राम ग्रामेजेतुंन सुशा कास्तानपि सोऽद्यत्वेनयेन वशयितुं समुद्युङ्क्ते। तथाच-

कौटिल्यजालप्रवितानदक्षः, स्वपक्षपुष्टीकरणैकलक्षः।
विसृज्यदूतान् परमण्डलानि, प्रियोप जापानि तनोति तानि॥७४॥
सत्कारपूर्वं कुटिलस्वभावः, संज्ञातनच्छौर्य्यगुणप्रभावः।
आहूयकांश्चित्सुपदं प्रदाय, तैः स्वेष्ट सिद्धिं भजते समायः॥७५॥

तृष्णापिशाच्या परिमुह्यमानाः, शूराश्रहो चाऽपि गताभिमानाः।
तद्गृह्यतादोषवशादिदानीं, कुर्वन्ति केचिन्निजजातिहानिम् ॥७६॥
संभूय वीरा यदि भारतीयाः, स्वदेशरक्षाकरणाय भूयः।
सज्जीभवेयुर्न दशास्यकल्पो प्येषांरिपुस्तर्हि पुरःस्थितः स्यात् ॥७७॥

अहो कलि काल महिमा-यत्स म्लेच्छ राजः—

युक्त्याक्षितीशान् स्ववशान् विधाय, तत्कन्यका दानमनाः कुकायः।
प्रवञ्च्य कामी सरल स्वभावान्, कलङ्कयत्याः कुलमेतदीयम् ॥७८॥
भवादृशाये सुकृताव ताराः, केचिन्महीशाः सुयशो विसाराः।
तत्कामना काननदाव भूताः, सन्त्यत्रतांश्चाऽपिवशी चिकीर्षुः ॥७९॥

अत एव भावत्कं लोकप्रसिद्धं चित्रकूटदुर्गं स्वायत्तीकृत्यापि सहताशो यवन पाशो न सन्तोषमृच्छति किन्तु भवदधिष्ठितमिदं स्थानं झटित्येव वशयितुंवावश्यमानः श्रूयतेतद् यावत्स लब्धमनोरथो न भवति तावदेव क्वचन निबधि स्थाने स्थितिं विधाय शक्तिसंग्रहपुरःसरं तत्प्रतिविधानाय समुद्योगं कर्त्तुमर्हति देवः। ये यवनसंसर्गकलङ्किताः प्राप्ताधिकारवञ्चिताः, स्वजाता अपि शङ्किता धीरङ्किताः सन्ति यद्यपि तेषां संख्या नातिन्यूना तथाऽपि ये विशुद्धकुलोचिताभिमानाः स्वधर्मादिसंरक्षणे सदा दत्तावधानाः पराक्रमसम्पादितस्वल्पेतर वैरिहानयः भूमिजानयो विद्यन्ते तेऽप्यवश्यं यथाऽवसरं सपत्नमानसंमर्दनविधावुत्तिष्ठमानं संग्रामाङ्गणे विद्यमानं तत्र भवन्तमेवाऽनु गन्तारः, तेषांच महोत्कटानां भटानां मद्ग्रामहस्त्रिभिर्मनस्विभिः पूर्वजैर्महाभुजैः पुरुषैः कतिचिद्वारान् शत्रुसंहारान् कृतवाऽस्या मेद पाट रसायाः संरक्षण क्षणो व्यधायि स्वयमपि चयैर्भवत्कार्य्येष्वपि यथा शक्ति सहायता प्रादायि तेषामपिमानधनानां सुहृज्जनामामत्रविषये सविशयं सम्मतिं ग्राह्या कथंकारं प्रबलबलेन कूटनीति निपुणेन तेन प्रतिबलेन योद्धव्यमिति। यतो विजयश्रीलाभः परमाभः स्यात्। उक्तञ्च--

संमन्त्र्य सद्भिः सचिवैः सुहृद्भिः, कार्य्यार्थं निर्धारिणदत्तहृद्भिः।
यो भूपतिः संतनुते विधानं, तमेव लोको मनुते प्रधानम् ॥ ८० ॥

इत्युक्त्वा यदा ते विरेमुस्तदा सहृदयहृदयः प्रतापसिंहमहोदयः श्रीमद्भिर्विचारवद्भिर्यदुक्तं तद्याथार्थ्योपपन्नमिति कृतज्ञतापूर्वकं तत्कथनं प्रमाणीकुर्वन्

विचारपरिश्रयं संकलयितुं स्वजन्मभूमिमण्डनभूतांस्तान् भूपान् आकारयितुं दीत्यकर्मप्रशस्तान् महाविश्वस्तान सद्वंशप्रसूतान् दूतान् प्राहिणोत्। अथ कश्चिद् विपश्चित्स्तुतिपाठकस्तदा तत्रागत्य समुद्दण्डप्रत्यर्थिदुश्चेष्टा प्रध्वंसन रतेस्तस्य भूमिपतेरुत्साहं समेधयन्निदम् मुप श्लोकयितुं प्रववृते ।

विकृतयवनपवनाशन नागः, समिति समितजयमहानुरागः ।
सना सनातनपद्धतिरक्षः, सविनयनयजनतोषणदक्षः ॥ ८१ ॥
शङ्खसमानकन्धराशाली, शालीनत्वादिकगुणमाली ।
महाभुजो भुजगेन्द्रप्राणः, प्राणत्राणप्रोन्नतबाणः ॥ ८२ ॥
गूढजत्रुसहितोऽहितकालः, कालोचितचितसाधनजालः ।
पृथुवक्षा रक्षाक्षमपक्षः, क्षमापतिः पतितोद्धृतिदक्षः ॥८३॥
वीरशिरोमणि साङ्गजजातः, सार्वभौमरविकुलविख्यातः ।
जयतु जयतु भुविततप्रतापः,शुद्धयशाः शुचिमनाः प्रतापः॥८४॥

इति तदीयसूक्तिपीयूषरसं कर्ण शुक्तिकया निपीयनातितुष्यन्नपि कृताश्रितलोकपोषः, विहितदीनदैन्यदुःखमोषः, समुचितपारितोषिकप्रदानेनतम्परितोष्य मध्यान्ह समयः समजनीति ततः स्थानात् प्रस्थाय परिमिति परिजन सहितः, सलोकमहितः परिहृतहेयः धैर्यधौरेयः, वासववासोपमं सविभ्रमं लोचनलोभनीयचन्द्रशालं विषाद, विषादं चेतः प्रसादम्प्रासादंसमाससाद ।

इति श्री प्रतापचम्पूकाव्ये
प्रथमो निश्वासः ।

# अथ द्वितीयो निश्वासः ।

———:o:———

यो नतवत्सलताऽऽहितकायः, परन्तपो दि[1]तमायिकमायः ।
युगे युगे जनिमेत्य जगत्यां, कलयतिऽकलाकौशलीं सत्याम् ॥१॥
लीलाधरोऽधरोन्नतिकामः, साधुसमाजसभा[2]जनयामः ।
सोऽत्रभवान् सन्तापविसारं, हरत्वादद्यान्नः सुख[3]वारम् ॥ २ ॥

अथ कश्चिद् विपश्चिद् वनविहाररुचिधारी, प्रतापमहाराजकर्मचारी, निदाघान्ते परिश्रान्तिविश्रान्तिकृत, परिभ्रमन् नेत्र चकोरचन्द्रिकोपमां वर्षर्तु सुषमां विलोकं विलोकं प्रमोदन् प्राकृतवस्तुवर्णनकलांविदन् स्वभावपवित्रं निजमित्रं प्रतिजगाद मनोहरनिगादमिति सखे सुन्दर दृश्य विलोकनेश्वर ! वीरेश्वर विलोकयतामियं लोकसन्तापमुषः प्रावृषः सश्रीकतायाऽपरिमिता, अहोरात्रान्तरजाः संतापरहिता वसुन्धरायामभि[4]वर्त्तति, उन्नमितमनोज्ञकलाप-कलापा, निकुञ्जभूव्यापिनः कलापिनः सकेकारवं नृत्यन्तः प्रकटयन्तीह कामपि कौतुकपरम्पराम् । चञ्चलाऽऽचितविग्रहाः कृतमहाविलनिग्रहाः सघना घनाः वियोगिजनविभीषिकाप्रदानायेव सगर्वं गर्जन्ति तर्जयन्ति च विषमाशयान् बिलेशयाननु चञ्चलेयं चञ्चला खलप्रीतिरिव क्षणं प्रादुर्भूय-तिरोधत्ते दृष्टिप्रमदे[5]प्रदा वारिदा वारिभरभरिताः सन्तः समेधितविभूतयः सन्तइव नम्रीभवन्ति, चारुशिलोच्चयशिलोच्चयोश्च [1]खलदुरुक्तानि सज्जना इव धारापातान् सहमाना अपि नहि विकारमापद्यन्ते, वर्षाकुनदिकाः प्राप्तकिञ्चिद्धना आजन्मनिर्धना जना इव निर्मर्यादं प्रवहन्ति, मुक्ताफलाभमपि वृष्टिजलं पल्वलसम्पर्कवशान्मायाशबलितप्राणीवमालिन्यं बिभर्त्ति । संप्रतिजलानि समन्तात्संभूय सभूय पात्रेषु गुणा इव जलाशयेषु संचीयन्ते, हरिभक्तौ भक्तजन चित्तानीव कूलङ्कषाम्भांसि महाम्भोनिधौ विलीयन्ते,

१ खण्डदाम्भिक लोक दम्भव्यवहार इति यावत् । २ सज्जनवृन्द सत्कार यापित समय इतिभावः । ३ वारः समूहः । ४ स्वामचित्तमिव निर्मल तागइति भावः । ५ प्रमदो हर्षः— प्रमदसंमदौ हर्ष इति पाणिनि सूत्रम् ।

मृगाध्यासितशाद्वलानि वनस्थलानि चाऽद्यत्वे लोकोत्तरामेव च्छायां बिभ्रति, रजोबहुला अपि भूप्रदेशाः, सरससस्यसम्पत्तिविशेषाः सत्त्वसंचार सुभगाः दर्पाणितदर्शकलोकलोचनतुरगा प्रतिभान्ति:—भूमिबलयललित क्रमाः शाणोत्तेजितमाणिक्यकणिकाविभ्रमाः, परितः प्रतीयमानाः कस्य न दृष्टिं प्रसादयन्तिशक्र वधूटयः।

अभिनवजलधारासारसंसिक्तभूमेः,
सुरभि सुरभिगन्धं गन्ध वाहप्रवाहः।
दिशि दिशि वहमानो मानिनीमानसेऽपि,
कलयति वरहंसावास चर्चाप्रसंगम् ॥३॥

मुकुलितनिचुलकदम्बकमालं, विकचमालिकाकुटजविशालम्।
पश्य सखे पुरतोप्युद्यानं, भाति कथं भसलोरूद्यानम् ॥ ४ ॥

भूमिः सुसस्याबलि-बद्धरोमा, शैलस्तनी गह्वरगूढनाभिः।
अधित्यकाहारि बृहान्नतम्बा, बिभर्ति रूपं नवनायिकायाः ॥५॥

अयि! विज्ञप्रवर मित्रवरं वनविहारशीलोऽपि प्रकृतिदृश्यविलोकनसातिशय लीनोऽपि परवारणनिवारणसिंहः श्री प्रतापसिंहः स्वदेशस्वतन्त्रताकामी नः स्वामी परमरमणीयतामयेऽप्यत्र समये यवन भूभुजा विहितां स्वजातिगौरवहानिं तां वारं वारं स्मृति पथं प्रापयन् क्षणप्रियोऽपि क्षणमपिनसुखं लभते, किन्तु प्रत्यहं वर्द्धतेऽस्य कृताङ्गसादो विषादो न प्रसादः, स्फारीभवन्ति साधयो व्याधयो न समाधयः, हन्त लावण्यविहितानङ्गमानभङ्गानि चास्याङ्गानिक्षीणप्रायाणि सम्पद्यन्ते, किं बहुना स मेधते ऽभिमतभोगेष्वप्यरुचिः, नाभिरुचिः, वृद्धिमृच्छति तरां यथा सपत्न विषये क्रोधस्तथा नैवात्मावबोधः, संप्रत्ययं रोचयति युधि वैरिजन निरासं नाऽवरोध सुन्दरीजनसंगमाभिलापं, धन्यो ऽयं सौजन्यजन्ययशोराशिः सपत्नचिल्लाभयाद् राशी, समस्त जातिपुरःसरसमुन्नतभालः श्री प्रतापसिंहो नामास्माकं महीपालः। यस्यभयाद् स उदग्र दण्डो महाप्रचण्डो दिल्लीपतिरपि नानिश्चिन्तं शेते। अधितल्पं शयानो ऽपि समन्तात्प्रबुद्ध सास्त्राङ्गरक्षिप्रधानो ऽपि तद्देश्यतीं मिथोऽनुभवन्निवोत्स्वप्नायते। अतिचित्रमिदं यत्सोऽतुल शक्तिराज समिद्धनिदेशो यवनेशः कूटनीति प्रगल्भ शेमुषीको महाभीकस्तमेव निर्भयताऽऽपादनधिया प्रतिपदं विकलयितुमुद्युङ्क्ते।

यद्वार्त्तयाऽपि रिपवो विकलीभवन्ति,
मित्राणि यस्य कथया च मुदं व्रजन्ति ।
यस्याश्रयेण च जनाः कुशलं मठन्ति,
तस्यैव जन्म सफलं सुधियो भणन्ति ॥६॥

अथ महाराजचरणानुरागो वीरेश्वरमहाभागोऽपि पुरातनकथारसास्वादन-देवाकः समुपलब्धबुद्धिवैभवपरिपाकः, तदुक्तिरसं सरसं कर्णातिथिं विधाय चेतश्च ममाधाय तं प्रत्युवाच । स्वभाव पवित्र परममित्र ? इति वृत्तवृत्तावबोध वितन्द्रप्रबोधचन्द्र ? किमपराधं श्रीमताऽत्र भवता नयवता श्री प्रतापसिंहेन दृढ़ विद्वेषयुजो म्लेच्छभूभुजो गुर्वीरवरस्याऽस्याकवरस्य यदसौ तदीय पूर्वजभूवल्लभ-मतल्लज गौरवस्तम्भरूपं विलक्षण स्वरूपं तत्तन्मनोज्ञोपयोगि साधन कूटं चित्र कूटं दुर्गं स्वं कृत्या ऽपि न तुष्यति एरांपतापी स पापी, किमत्र निगूढ तत्त्वमिति यथानुभवं मां प्रत्यपि बोधयितुं प्रभवति भवान् प्रणयवान् ? आशा मे चाहमत्र विषये विशिष्ट बोधवता भवता ऽवश्यमेव सन्तोषयिष्ये– इति ततः परं सोऽपि तत्र सविशये विषये जिज्ञासातिशय निश्चिन्वानः, प्रस्तुतगोचरज्ञानञ्च हिंसो-दर्कं मन्वानः, यथा भानं तन्निबिड वैरनिद नं वक्तुमारेभे । तद्यथा–अयि स्वजन्म भूमि कल्याण कामनाधर क्षयस्य प्रवर यद्यत्र ते कौतुकं तर्हि सावधानँ शृणुया यथा श्रुतँ तद्विरोधकारणं तत्त्वं संक्षेपतो वक्ष्यामीति येनात्रत्याभूतपूर्वनृपाणां यवन मद क्षयकर्मरतानां परिचयपुरःसरं तदवबोधः स्यात् । पूर्वं किल सतांविधेयः समाहित समाधेयः सम्यग् विनीतविनेयः श्रीबप्पारावलपदाभिधेयः, सपत्न-वृन्दैककालः क्षमापालः समभवत् । सहस्र भानुकुलावतँसः सराज हंसः, अत्रत्य मस्यं कल्याण कामनया महाकृतज्ञ संग्राम कलाविज्ञ भिल्ललोकमनुकूल्य तत्स-हायः, संगृहीत रण विधिज्ञ राजन्य भट समुदायश्च देश द्रोह कर्म निरतान् स्वार्थोप पत्तिरसान् पुरुषान् समूलमुन्मूल्य चित्रकूट राजधानी मधिष्ठाय सकलमपि मेदपाटभू बलयं वितततया समस्त संपत्तिभाजनतया सुरैरपि स्पर्हणीय शोभं व्यधात् । सद्विचारनिश्चलः समहाबलः, महामद संभृतं गजिनीभूभृतं सकृदेव करदीकृत्य खुरासान नायकाभिमानं चापनीयतँ प्रतिवर्षं प्रदेयभागधेयमाकलयामास महाबलविभ्राजं कन्धारराजं च विजित्य सुपथगामिनं विर चयांबभूव ।

प्राक् शासन इव प्रबलबलाराति नाशनः, विजय इव प्रति संग्राम विजय

श्री विकासनः, प्रकृतिजन्यकृत गृहीत विकरालचन्द्र हासः सज्जन प्रमोद सरोज द्युमणि प्रभासः, विद्याविलास मनः सुधाः इव सौरभ गुणभाजनम्, संमानितमान्यः समहावदान्यः, महाकुलीनः सुशीनः, किलायुष्य सुखमनुभवन्, प्रजा इव सर्वा अपि प्रजाः साधु पालयामास । प्रति मार्गं च तेन महाविशाला निर्मापिताः पान्थ शालाः, तत्र च २ प्रत्यह सवेधं संस्थापितानि मनोज्ञानि मनोज्ञानि प्रणास्थानानि, ग्रामे ग्रामे चातुरजन चिकित्सार्थं सज्जीकारितानि चिकित्सानिकेतनानि ।

> शिशुनां शिक्षार्थं प्रति नगर मेवावनिभुजा,
> महा विद्यापीठाः प्रथितमतिना साधु गतिना ।
> अहोतेना ऽनेकेष्वरचिषन विज्ञाश्च गुरवः,
> प्रयुक्ता स्वत्राध्यासितरुणकरुणाः पाठन चणाः ॥७॥

> शारीरिकोन्नायकृते ऽच वाटाः, पुरे पुरे देशहितेन तेन ।
> सन्तेनिरेऽद् निजराज्य बाला, बभूवु रुन्मत्तविरोधिकालाः ॥८॥
> तस्मिन् नृपे शासन कर्म कर्मठे, संविद्यमाने ऽत्र नचारिभीतयः ।
> आकर्णिताःकाऽपि तथा सुरीतयः, श्रुताःसदामङ्गल नीतिगीतयः ॥९॥

अद्भुत सम्पदा कृतानेक लोक विस्मये तस्यभूमिनाथ कस्य समये समुचित विधि निदेशस्याऽस्य मेद पाट प्रदेशस्य या समुन्नतिरभूत्तद्वर्णने तु नालं तत्र भवा वेद मुखश्चतुर्मुखो ऽपि का गणना तत्र मादृशा मति तुच्छ दृशाम् । अतुलशक्ति सम्पन्नस्य संर्दलित विपन्नस्य सुनीतियुजोभूभुजो अमुष्य समर्धातनयाः, सविनयाः समभ्यस्तशिष्ट समयाः परिशीलित युद्ध वद्या, अनवद्याः,प्रत्यर्थिलोकस्मय विलोपदक्ष बाहवो बहवोऽपि प्रकृति पवित्राः पुत्रा अभवन् । नाना विध गुणमये यैः सन्तोषित स्वजन्म रसैः पराक्रमरसै रति विमलं निजकुलं नितरा मेव विपुलतां नीतम् ।

> म्लेच्छ प्रतीकार रसस्तरस्वी मनास्विवर्योऽथ महायशस्वी ।
> खुमानसिंहोऽपि तदीयवंशं स्वजन्मनालंकृतवान्सुशंसम् ॥ १० ॥

तस्यैव भुवनप्रशंसे वंशे सतां गतिः श्री पृथ्वीराज राजभगिनीपतिः श्रीमान् समरसिंहोऽपि प्रादुरभूत् । योऽनुपमवलः प्रतिभट बलावले सँहारारम्भस्तकलः रणाङ्गणे शाहबुद्दीनगोरी बलगौरवमपि लाघवंनिनाय ।

तीव्रबाणखड्गाऽऽयुधधारी, निःशङ्करणभूमिविहारी ।
यः सिंहोमृगमिवारिवारं, नाशितवान्किलवारं वारम् ॥११॥
पृथ्वीराज राजहित कर्त्ता, संग्रामे तद्रिपुसंहर्त्ता ।
वीर शिरोमणिरिह विख्यातः, संस्मरणीयः सायं प्रातः ॥१२॥

सचान्ते क्षत्रियकृते युद्धमेव स्वर्गद्वारमिति निश्चित्य नाना पवित्रधाम भूषितमपिस्वभूमण्डलं म्लेच्छ प्रवेश दूषितं सांप्रतं वस्तुं न सांप्रतमिति स साधुवादं शत्रुभिः प्रयुध्यसुराङ्गना सौभाग्यसम्पत्तिसंवलितं संकल्पमात्र सम्पद्यमान समस्त समभिप्रेतवस्तु ललितं पुण्यातिशयसुलभं निरुपमप्रभं सकल दुःख सम्पर्क विरामममजरलोकधाम समाससाद ।

हा हन्त ! तदानीमेव दुर्दैववशात् क्षत्रियकुलकलङ्क जयचन्द्र दौरात्म्य प्रसङ्गाच्च निशितकराल करवाल शालिबाहुः संग्राम शूरमहाक्रूर प्रत्यार्थि सार्थकराहुः सदाचार संपालनतत्परः, सत्यसन्ध प्रवरः साक्षात् शौर्य्य गुणविशिष्ट मूर्त्तिः समनुष्ठितश्रीतलोकमनोरथ पूर्त्तिः, संयोगितासनाथः सभारतमण्डलैकनाथः महाराज पृथिवीराजोऽपि पराजितचरशाहबुद्दीनगौरीकूटपाशसंरुद्धगतिः, सुमहामतिः सुरातिथिभावं यथा रोचयामास तथावृत्तंवृत्तं कदाचिद् भवताऽपि नाविदितं भविष्यतीति तद्विषयं न विशेषं प्रतिपादयितुमुचित मुत्पश्यामः । ततः परं भारतवर्षस्य स्वातन्त्र्यरत्नं मेव प्रायोवैदेशिकै रपहृत मितिनिःसंकोचं वक्तुं पार्य्यते । रणधीरे महावीरे समरसिंहे तस्मिन् दिवँगतेधातुस्थान आदेशइव तत्सिंहासने श्रीरत्नसिंहो विरराज ।

भक्ता सती कान्त गुणानुरक्ता, सक्ता सदाधर्म्यविधौ विविक्ता ।
शिवस्य गौरीवहरे रमेव, तस्याङ्गनाऽभूत्किलपद्मिनीसा ॥१३॥
सौन्दर्य्यमूर्तिः सुगुणैः परीता, सीतेव गीता पतिदेवतासु ।
नाऽभूत्तदानीमपिकाचिदन्या, धन्याङ्गनातत्प्रतिमाक्षमायाम्॥१४॥
तस्या मुखश्री विजितोऽयमिन्दुः, परास्तिचिन्हं कलयन् कलङ्कम् ।
मुहुर्मुहुः क्षीणकलो विखेलं, महाविलं संश्रयतेऽनुवेलम् ॥ १५ ॥
तन्नेत्रकान्त्या निकृतोनुमीनः, संतप्यनाथाऽपिजहाति दीनः ।
वारींणिकञ्जानितथैवतानि, त्यजन्तिनोतत्परितर्जितानि ॥ १६ ॥

एणीकुलं तत्परिभूतिभीत्या, वनाद्वनं धावति वाशुरीत्या ।
सखञ्जरीटोऽपि दिगन्तराणि, विगाहते कातरदृष्टि कोणः ॥१७॥
तथाष्टमी चन्द्रनिभं विशालं, तस्याः सुधीरैर्निरणायि भालम् ।
कोदण्डकोटिच्छवि चौर्य्यदक्षं, तद्भ्रूयुगवा जगदेक लक्ष्म् ॥१८॥
प्रद्युम्न केलीशुक तुण्डतुल्या, तन्नासिका दृष्टि सुधोरुकुल्या ।
प्रवाल विम्बीफलकान्तिहारी,बभूव तस्या अधरोऽतिहारी ॥१९॥
साकोकिलालापकलाप पण्डिता, संगीतविद्यो त्तमबोधमण्डिता ।
कम्बूपमं कण्ठ मुदारभावना, दधौवदान्या धृतकान्तकामना ॥२०॥

ताटङ्क कुण्डलमुखाभरणोरुकान्तिः,
कान्त प्रियाचरणभावितचित्त शान्तिः ।
लावण्यवारिधि समुत्तरणाय कुम्भौ,
मन्ये सती धृतवती स्तनयुग्मदम्भौ॥२१॥

विचित्रमूर्त्तेर्गुणवृन्द भाजो, रामामणेरामवधूसमायाः ।
तस्याःशयास्यातिशयानुकारे, प्यलंवराकः क्वचपल्लवोऽभूत्॥२२॥
अवद्यतागन्धविहीनवुद्धे, निसर्ग सम्पन्न शरीरशुद्धेः ।
तस्यास्तथाबाल मृणाल दण्डः, प्राभून्नवा बाहुसमानतायाम्॥२३॥
व्यलोकि वापीव तदीयनाभी, रोमावली शैवल संपरीता ।
वलिव्रजारोहण राजिरम्या, गम्भीरता शालितयातिरम्या ॥२४॥
तस्यावलग्नो दृगगोचरो ऽपि, वक्षोज संधारणतोऽनुमेयः ।
रम्भा च तस्याःसुमनोज्ञतायाः, विलज्यमन्येजडतांविभर्ति॥२५॥
तस्या महिष्याः प्रथिमावरायाः, आरोहयोः सातिशयोऽजनिष्ठ ।
चिरं विहृत्याऽदि सुधन्य दृष्टि, र्यतोन तस्याग सहाबभूव ॥२६॥
व्याकोशहल्लकविभापरिभूतिलग्नं, प्रत्यग्रविद्रुमरुचिप्रतिकारमग्रम्
तस्या व्यधायि विधिना, विधिनाङ्घ्रियुग्मम् ।
मुक्ता फलाभनखराङ्कितमद्वितीयम् ॥ २७ ॥
विशिष्ट लावण्यविभूति भाजनं, लोकत्रयी लोचनकष्टमार्जनम् ।
तस्या बभूवाद्भुतमेव सुन्दरं, वपुर्नयस्य प्रतिमा चराचरे ॥२८॥

अथ सदाचरित सदाचारः, तरङ्गिणीनाथ लोलकल्लोलयशःसञ्चारः, सुकृतस्वरूपः सभूपः, कमलया कमल नाभ इव गिरिजया गिरिश इव शच्या शची पतिरिवरत्या रतिरमण इव तया पद्मिन्या रममाणः सुखेन कालं तावन्निनाय।

सद्वृतः समहायन्य संवदाप्य प्रजेश्वरः।
शान्तिप्रियः प्रजाः सर्वागोपयामास निर्भयम् ॥

सौजन्य जन्यातियशारसाधिपः, प्रजागणश्रेयसि जागरूकः।
आजानशुद्धो ऽपि सदापरेषां, चेतांसिशूरो मलिनीचकार ॥२१॥

अथ खिलजी वंशीयो मोहमदीयो दुश्चरित पाटवाश्चर्य भाजनं कृतसु-पाटलोकान्तरङ्गः सभ्य जात्यर्कविपदः, पराङ्गना प्रसङ्ग तरङ्गित दुरभिसन्धिमनः कुरङ्गः, दुर्बल सत्वापहरणचङ्गः, स्वार्थसिद्धि समायोग संकलितानेक राजचक्रांग वनिताङ्गभङ्गः, वैरायमाणनागकटभङ्ग हेमाङ्गः। सतांदुर्वाच्योऽलाबुद्दीनपद वाच्यो वैदिक लोकप्रतीपो दिल्लीमहीपो हन्तमहनीय चरितस्य तस्यशुभमतः क्षोणीपतेः पतिदैवतायावनितायाः रूप लावण्य प्रशस्त प्रशस्ति कदाचित्कामुक लोकगोष्ठ्यां सातिशय सुन्दरी सौन्दर्य कथा प्रसङ्गावसरे कर्णगोचरी कृत्यपञ्च-बाण पञ्चबाण निमित्तीभूयभूयोभूयोहताशः स्लेच्छ पाशःस्वार्थसाधनोत्थानमहो ह्लासःकामान्धतानुरूप चेतोविलासः तद्वारणक निवारण कृते सि भैषज्य पद्मिनी पद्मं समुपलब्धुं यथामतिविभात प्रयत्नजातं सुगुप्तरूपं ततानप्रवितत कुटिलता वितानः, परन्तु दैव प्रतिकूलतया यदातस्य दुराशयस्य तत्र समुद्योगो नफलित स्तदा दुष्कर्म प्रवृत्ति लटकलोक चक्रवर्ती स सभ्यतानियसं निजाभिलाषं पूरयि-तुं प्रबलेन बलेन तां हर्तुकर्तु विकटकटकसंचार दुधर्ष वीरकेसरिप्रकर्ष बाणा-सन प्रभातकिरात संभूतं रत्नसिंहं नाम भूभृतं तत्सुखोत्सवंसमुत्सव माक्रम्य तत्प्रत्याक्रमणवशाद्भग्नाशः सयवनराशः सुदुर्विनेयः परास्तिपोथेयो यथा कथ-मपि प्रबलप्रहार जर्जरिताङ्गसन्धि दुरभिसन्धिः स्ततोऽपयाप्युत्य स्वराजधानीं सधि पादः समाससाद। अहोनुखलुभोः स दुरात्मा महापाप्मा स्वधर्मनिष्ठयाभुवन व्याप्त प्रतिष्ठया स्व नर्मकालीकरत्या तयासत्या तर्जितोऽपि विचित्र शक्तिसनाथेन तन्ना थेन चातिधार्षितो ऽपि म्लेच्छकुलकलङ्को दुर्व्यसनरत्वप्रमुखरङ्कोदिवानिशं ता-मेवहृदिदधानः प्रगतमानापमानभानः क्षितिपालभाग्यः कर्त्तव्याकर्त्तव्येभ्यो विरज्य मुषितनीवीकोग्राम्यधनिकइव उपसर्यानुधावना ऽवरुद्धो गवेन्द्र इव,

मव ग्रह नष्ट कृषिः कृषी बलइव, मृतभार्य्योनिः सन्तानो जीन इव, कोष्णां निःश्वसन् रहः स्थितो दुर्व्यस्थितोतिकृच्छ्रेण कंचनसमयं च्चिन्तामय यापयांमास । अथ तस्याभिलाष विदस्तस्य सुहृदः सभासदो दुर्मन्त्रिणो मन्त्रिणश्च परस्परं संमन्त्र्य दुराचारप्रचार विदग्धं कामाग्निदग्धं तंस्वस्थयितुं यथावसरं तदुपकण्ठमुपेत्य ललाटतटन्यस्ता अलि परस्परं प्रणति ततिपुरः सरंसविनयमिति व्याजह्रुः ।

तस्याः कृतेनाथ नृपाङ्गनाया, अपि त्वयाहन्त मुधैवतप्यते ।
कस्तादृशोहिन्दुनृपोऽद्यविद्यते, विपद्यते यो न तवावहेलनात्।।३०।।
कृतं विषादेन कुराण पण्डित ? कस्तेरिपुर्यो भवता न खण्डितः ।
आदिश्यतांवीर ? भटव्रजस्ते यत्तांत्वदायत्तरतिं विदध्यात् ।।३१।।
राजायनप्रान्त निवासिमध्ये, प्रायः स एवाऽस्तिभवद्विपक्षः ।
सोऽप्यद्यधृष्टो मदयुक्त चेता श्चित्तोडनेता स्वबलेन जय्यः ।।३२।।
विजित्यतं हिन्दुक राजपुत्रं, विहस्त्यतद्दुर्गमथो विचित्रम् ।
निगृह्यतां साऽपि विशालबाला, यथानुकूल्या शयनीयशाला ।।३३।।
अत्यल्प संख्या अपि राजपुत्राः, स्वल्पेतरा ऽशातिरणे विचित्राः ।
सन्नह्यतां तद्विजयायतेषां, सेनाः परे[1]ना बल शौर्य्य[2]धेना ।।३४।।
कामान्धितज्ञः सुकृतानभिज्ञः, श्रुत्वाथतेषां सुहृदां समेषाम् ।
तत्सम्मतिं स[3]म्मति पूर्तिकामश्चकार सो[4]ङ्कारमुखेसुवामः ।।३५।।
मूढोजनो दुर्व्यसनानुरागः, परत्र लोके च महाविरागः ।
अनर्थजातं कलयन् नितान्तं, दुनोतिकिंनो अपिहा महान्तम्।।३६।।
श्री रत्नसिंहोऽपि यथार्थ नामा, समस्त संसार-समिद्धधामा ।
दुर्दान्त शत्रु प्रतिकारकारी, कृत्याविशोकं विदधेस्व लोकम्।।३७।।
मनस्विनी सा पति देवतानां, पुरः सदासंसदि कीर्तनीया ।
मनोवचः संहननोद्यमेन, सन्तोषयामास वरं वरंतम् ।। ३८ ।।
प्रिया समेतस्य नृपस्य तस्य, प्रियप्रजारक्षणतत्परस्य ।
निःशङ्कसानन्दतया सुकालः, किन्नोव्यतीयाय महोविशालः।।३९।।

१—परः श्रेष्ठः- इनः स्वामीयस्याः सा । २—बलशूरतयोर्धेना नदी=२धेनः समुद्रे धेनातुनद्यामिति हैमः । ३—सम्मतिर्वांछानुमत्योरिति हैमः वरं श्रेष्ठन् सेक्तःवार यितावर इतिमंखः । ४—ओमितिस्वीकारार्थमव्ययम् ।

गृहे गृहे संमदमादधाना, निजे निजे कर्म्मणि सावधानाः।
प्राज्येऽस्यराज्ये सुगुणैर्ल सन्तोनराः प्रतीता बहुभाग्यवन्तः॥४०॥
वीरेषु नित्यं खलु वीरतायाश्चर्चा, तदाऽऽत्रावितितस्ततायाः।
कुलाङ्गना संसदि साधुरीतिः, पतिव्रतागौरवगुप्तिगीतिः॥ ४१ ॥
तदैव हाहन्त सुबुद्धिहीनः, कामातुरः सोऽपि अ[१]लाउदीनः।
निजेष्ट सिद्ध्यै बहुसैन्ययुक्त स्तत्रापतत्साधु विचार मुक्तः ॥४२॥

असंख्य सेनासहितो विविक्तभाव रहितः, निष्करुणतासंचार, महादुराचारी, स द्वितीयवारं चित्रकूट राज सँहारं विधातुं तद्दुर्गद्वार वारंसमन्तादवरुध्य युद्धाय कृतनिश्चयः प्रादुष्कृत दुष्कृत संचयः, तत्राऽवतस्थे गभीरोपरस्थे। स्वदुर्गनिग्रहा अतिस्वल्प धान्यादिसंग्रहाः संग्रामग्रामश्रुतविक्रमाः प्रत्यनीकानीकदुःसहप्रत्याक्रमाः क्षत्रियधर्म विवेचन धीरा मेदपाटेश्वर सैन्यवीरा अचिरकालं यावत्तावत् प्रत्यर्थिनः सभ्यंतर पक्ष समर्थिनस्तस्य म्लेच्छेश्वरस्य नानाविधविचित्र प्रहरणैः प्रहरतां महादुर्मदभृतां वीतदैन्यानां सैन्यानां समुचित विक्रमेण प्रत्याक्रमेण स्वागतं विधाय बाहुजबाहुबलसारं किंविघ्नंभवतीति साम्रेडं व्यजिज्ञपन्। ततो बहु संख्याऽऽप्ते महाक्रूरा वैरिसैनिकशूराः सर्वतो निरुद्धविरुद्ध वीवधा सारप्रसारा१श्च बहिः संचाराः कथंकारं नामदुर्गभूमिनिरुद्धेन सदाऽनुचित संमुखीनयुद्धेन परिमितसाधन प्रजा भूभुजा तत्संहार कामिनाऽपि मे स्वामिना जेतुं सुशका इति संप्रधार्य्य धर्मधना सा सुवदना, शिष्टाचार मकरन्द पद्मिनी पद्मिनी सुकृतावतारं स्ववारयितारं यथावसरं प्रणिपात पुरःसरं युक्त्याऽनुकूल्य मिथ्याबोध प्ररोहंमोहं च समुन्मूल्य ततः पूर्वमेव प्रभञ्जन देवादिव्ययानं स्वर्गप्रस्थानं रोचयामास। कुल मर्य्यादासंरक्षणाय निज सम्मान पालनाखर्वं गर्वं समस्तावरोधस्त्रीवर्गं च तथैव विधातुँ समुत्साह्य तत्रैवचन्दनागुरु देवदारु निचितां कर्पूर सर्जसारादिवस्तूपहितां बहु विस्तार समन्वितां चितां निर्माप्य समुचितावसर प्रतीक्षा समुपलब्धवैदिक धर्म दीक्षा, कृतषोडश शृङ्गारा परित्यक्तसंबन्धिमोहमारा ससहचरीपरिवारा निश्चिन्तीभूयाऽवस्थिता सुव्यवस्थिता। अथानुमोदितधर्मदार प्रबन्धः स निर्बन्धः, केसरवेशधारिभिः सपत्न संहारिभिः, धनुर्वेदरहस्यबोधैः स्वयोधैः कन्दरिकन्दरायाः

१— अल्लाउद्दीनः—१ गम्भीरा नदी समीपे, इत्यर्थः।

क्रुद्धः सिंहइव सरत्नसिंहस्तत चित्रकूटभूमेर्निर्गत्य पराक्रमेण कृपाणपाणिः सँग्राम विद्यान्तर्वाणिः, शत्रुसेनानीलोके निरालोकं विदधानः, सवीरप्रधानः, असंजातवैरं तत्सैन्यं संहारं संहारं भूमौ न्यपातयत। विद्वेषिपयोदसमीराश्च तस्य सैन्यवीराः अहमहमिकयाकृष्टोज्वलाः क्षेत्राणीव वैरि सैन्यवृन्दानि निशिताग्रैः क्षुरप्रैर्हृदयभेद-नाप्यर्थशक्तिभिः शक्तिभिः सभल्लैः कौन्तेयकमतल्लैश्च कर्त्तकर्त्तभूमिवर्द्धनानि कर्त्तुमारेभिरेतानिविजय गद्धनानि। अथ तद्व्रणनिर्गत कोष्णशोणित धाराभिः स्वधाभुजः स्वभुजस्तदीय कलहजन्यसन्तापान् सानुतापान् सन्तर्पयामासुरिव।

राजन्य सैन्याऽऽक्रम जन्य दैन्याः, सैन्यारिपोस्तस्य परेतजन्याः।
अहोबलीना अपि नाकुलीना, लीनाशवालीषु यथा सुदीनाः॥४३॥
ते मेदपाटेश्वरवीरलोका, स्तीव्रप्रहारैर्घटितारिशोकाः।
एकाकिनश्चाऽपिरणे विपक्षैः, सम्भाविता नैकतयाकुरक्षैः॥४४॥
सोत्साहमुद्दश्य कृतप्रहारान्, कराग्रचञ्चत्करवालवारान्।
आलोक्य शूरान् पुरतोरिसैन्या, श्चकम्पिरेजृम्भितभूरिदैन्याः॥४५॥
क्षीणौजसः केचन शुष्ककण्ठाः, भयद्रुताः संगरभूमिकायाम्।
राजन्यजन्यक्रम मा निरीक्ष्य, स्वालेख्य लीलांकलयांबभूवुः॥४६॥
तन्नायकायुद्ध पराङ्मुखाँ स्तान्, विलोक्य कोपारुणदृष्टिभाजः।
व्याजह्रिरे रेऽधम वृत्तिचित्ताः, किंनिन्द्यकर्माऽऽकलने प्रवृत्ताः॥४७॥
अयेकुराणध्ययनाप्तबोधायोधा, मनाग्भावयतेतिचित्ते।
हिन्दू जनाग्रेऽपि हहो सुदैन्यं, किंजातु यायाद्यवनेश सैन्यम्॥४८॥
एतेवराका बलिभोजिकाकाः, कदावधिस्थातुमलं पुरोनः।
संख्येऽत्रतद्वीर्य्यरसैरसूलः, संभावनीयस्तव सानुकूलः॥४९॥
हिन्दू विनाशेबहु पुण्यलाभः, कल्पान्त वर्तिष्णु मनोहराभः।
युष्मत्कृते संप्रतिपादशाहस्तुष्टो, न किंदातुमलं सुवाहः॥५०॥
पैगम्बरोनः समदर्शितात्मा, पश्यत्ययेऽल्ला प्रणिधिर्महात्मा।
ससप्तमव्योम निवासिनं तं, विज्ञापयेद्वः सुकृतं नितान्तम॥५१॥
कृतानुमोदः स खुदाऽमुनैव, लोकव्यवस्थां तनुते सदैव।
हिन्दूचये तद्रुचिरत्र देया, न जातुयानः समये विगेया॥५२॥

इत्येवमाद्यैर्वचनैस्तु तेषां, प्रोत्साहमासाद्यहतौपरेषाम् ।
यथाकथं चित् प्रतिपन्न पक्षाः, पुनर्बभू वुरिपुहेतिलक्ष्याः ॥५३॥
दुर्गाद् विनिर्गत्य यदासुभालः, प्रत्यर्थिनाशाय सभूमिपालः ।
उद्योगमाधात्सुयशो वितानस्तदैव, देवी सुरुचिंततान ॥५४॥

दुर्गद्वाराणि संवृतकवाटविसाराणि विरचय्य गङ्गावर्त्तसनाभिनाभिः साध्वीराङ्गनाभिः समुचित चितायां तस्यां चितायां समुपविश्य ।

देव देवं महा देवं पति देवं तथैवच ।
निधाय हृदयेभक्त्या जुहावज्वलनेवपुः ॥५५॥

ततो विदिततत्स्वर्गस्थान प्रस्थान समाचाराः क्षोणीपति योधवराः तत्रै-वद्विव्यानन्त भोगमहोदये महोदये ( स्वर्गे ) ताभिस्ताभिः स्वस्वप्राणसमाभिः संगन्तु मिच्छयेव द्विगुणितोत्साहाः सुविशालबाहाः,पुनरपि तथादुर्दान्त शात्रवध्वं-सकर्मणि प्रवृत्ता यतोऽखर्ववीर्य्यगर्वा अपितत्प्रहितहेतितति विकलितगात्राः सुदुः सहवेदनापात्राः सन्तः प्रत्यर्थिसैनिकेंषुकेचन क्षणेनैवक्रव्यादप्राणिसग्धिमहोत्स-वतां प्रपेदिरे । परमति संख्यत्वाद् विरोधिसेना रक्तबीजायमाना अल्पपगणनाभिः क्षत्रियसेनाभिर्निःशेषीकर्तुंनाशक्यत। यदानिरन्तर शस्त्रास्त्रप्रचालन व्यापृतिवशादन्ते शिथिलाङ्गाः समजनिषत, तदासदयतादैवैः सपत्न सन्यैरनायासेनैव विजयलाभ उपलेभे, अतीवभयङ्करे तस्मिन् संगरे महाराज रत्नसिंहस्यैवा दशसंख्याः महा-भिख्याः सनय विनयास्तनयाः प्रचण्डशस्त्रास्त्र प्रयुक्तिकौशलं दर्शयन्तः, क्रूरातस पत्नपुङ्गवपूगं च प्रधर्षयन्तः, चिरंसाधु पराक्रम्य मतृचरणसेवा विधित्सयेव प्राणप्रियाभिः प्रियाभिः संजिगमिषयेव म्लेच्छ संसर्गदूषितभूमण्डल परिजिहीर्ष येववीरगतिकासाद्यस्वस्था अभूवन् । ततः परं निर्भीकं सोऽभीकः पद्मिनी पद्मं संजिघृक्षुः महासुभगं तच्चित्रकूटदुर्गं प्रविश्य समन्तात्तत्रतांमार्गयमाणः प्रमत्त इवाऽसंभूतविचार शतैर्विभ्राणः सयदाकृतबहुयत्नोऽपि तदुपलब्धिभाजनं नाभूत्तदा विध्वस्ततत्रत्याऽद्भुतवस्तुव्रातः सानुतापः सपापः स्वपुत्रं तत्रनियुज्य स्वराजधानीं प्रपेदे सोऽपिततोविभीय जनकानुमत्याकृत प्रबन्धः क्षिप्रमेवतदुपकण्ठमगात् ।

अजयसिंह शुभाख्य उरुक्रमः, प्रथुलकीर्ति विडम्बितविक्रमः ।
अथसुतोऽस्य यथासमयंकृती, समुपगम्यतदासनमाबभौ ॥५६॥

हम्मीरसिंहोऽथ विचित्रशक्तिः, प्रकाशितारातिवध प्रसक्तिः ।
तद्भ्रातृजः संगरलब्धकीर्तिः, सिंहासनस्थो ऽजनि शौर्य्य मूर्तिः ॥५७॥
प्रत्यर्थिकालः श्रितलोकपालः, शूराग्र्यगोष्ठीधुरि दीप्तभालः ।
श्री क्षेत्रसिंहो जनकानुरूपः, सिंहासनं प्राप ततः सुभूपः ॥५८॥
लोकप्रियः शिल्पकला विकासी, म्लेच्छाधिपन्यक्कृति सद्विलासी ।
तदासनं वैरिगजेन्द्रसिंहः, प्रापाथ धन्यः किल लक्षसिंहः ॥५९॥
चुण्डाग्रजो मोकलनामधेयः, सतांमतः शासित दुर्विनेयः ।
ततः परंधर्मपरः कृपालुः, सिंहासनस्थो ऽजनि शत्रुभालुः ॥६०॥
उत्पाटितोन्मत्त सपत्न वर्गः, सदा प्रजारञ्जन दृष्टगर्वः ।
श्रीकुम्भसिंहो यवनारिहन्ता, जातोऽभुवोऽस्या अथसंनियन्ता ॥६१॥

महामहिमभृता तेन महीभृता, सर्वे ऽपि तदानींतना अत्रत्यबाहुजजना एकत्र प्रेम सूत्रेमणयइव संपूज्य मालायमानाः शुशुभिरे—अलाउद्दीनो महाहीनो मेदपाट प्रदेशस्य यावती तस्य क्षतिमकार्षीत्तस्याः पूर्तिं विधायभूयोऽपितेन राज्ञा चित्तौड़ राजधानी सर्व सम्पत्तिभाजनत या लोकोत्तर च्छवियुक्ता व्योम चुम्बि ध्योममंजरी समुच्छ्राय संकलिता व्यधायि अहमदशाह मोहम्मदशाह नामानौ गुर्जर मालवधामानौ महाबाहौपातसाहौ पराजित्य विजय स्तम्भ स्थापनेन निजबल गौरवं चिरस्थायितांनिन्ये ।

विरोधिनोहन्त निशम्य किंनो, भीताःप्रतीताः कुटिलाभवन्ति ।
भीतास्ततःशत्रुगणानरेन्द्राद्, यथामृगाश्चण्डबलान्मृगेन्द्रात् ॥६२॥
तद्राज्यभूमिं समयाऽपिनायुः, प्रियं समेषा मपिकिं न वायुः ।
परस्परं प्रीति जुषोमनुष्याः, सनाभयोवा पिशुनैर् दूष्याः ॥६३॥
सद्वृत्तयस्तन्त्रमिवात्रतेनुः, सदासतां पादरजांसिनेमुः ।
श्रीराजमल्लोऽथमहानुभावः, सत्यप्रियःशान्तिमयस्वभावः ॥६४॥
सिंहासनं प्रापपितुः पितेव, शशास लोकं कुशलं सदैव ।
संग्राम सिंहोऽथ महानुभावः, सिंहोरुसत्वो रिपुकक्षदावः ॥६५॥
तदात्मजो जृम्भितकीर्तिलाभः, सिंहासनस्थोऽभयदुन्नताभः ।
उत्पातिनः शौर्य्य धनेन तेन, संख्येहताशा विहितानु केन ॥६६॥

अथ सुदृढ बाहुकन्धरः, मुगलवंश धुरन्धरः, सदा संग्रामाभिलाषः जितकाशिता प्रकाशः, संचित विक्रान्त सैन्यनिवहः, देहलीराजाऽकबरस्य पितामहः

तदानीमेव दिल्ली मण्डल समिद्ध शासनं लोदीवंश पाकशासनं पानीपतिस्थाने सुव्यवस्थाने पराजित्य तत्सिंहासनं बहुमूल्यरत्न दीधिति विराजनं चाधिगत्य विरराज। उद्दण्ड प्रत्यर्थि सैन्य निवहेषु विविधस्थान महाहवेषु, सुकृत विद्विषां महामहजुषां शठानां यवनराज भटानामष्टा दशवारान् विजेता स्वजाति गौरवस्योन्नेता– अननुभूत विपल्लवः समाश्रित जनभव्यरूप पाद पल्लवः, समेदपाट भूवल्लभः आर्य धर्मद्वेषिणं स्वानुकूल लोकहितैषिणं महाभिमानं स्वार्थोपात्तावृत्तिष्ठमानं तमेव लोकय पुण्यभूमि हितकामनया दुर्भावानुमतँ तदभिमतं व्यर्थयितुं मनश्चकार दयावतारः। ततः सामन्त सहायतां लभमानः कतिपय सुहृदय भूपालबल सम्बधितमानः, श्रीकर सुविधवियाना नदीतट परिसरे म्लेच्छनायकेनतेन सि संग्रामविभुः, धूतकामुकेषुः कृत सैन्य संनाहः सत्संगरनिर्वाहः, अवतस्थे।

अथ विजयाभिलाषिणोः शूरोचित भाषिणोः सभ्यराज म्लेच्छराज योस्तयोः लोमहर्षणं रुण्ड मुण्ड संघात संघर्षणं रक्तधारा समुन्नधरातलं परितः पतित स रुधिर कीकस सँचर्वणं प्रवण शृङ्गालादि पलाश प्राणि सँकुलं तुमुलं जन्यमजनि, भारततोयवन निष्कालनकृत प्रतिज्ञः संग्रामविद्या हृद्यविज्ञः सँग्रामसिंहोऽसौसिंह इव महाविक्रमः, त्रिविक्रम इव, विहित दैत्यनिग्रहो पक्रमः। प्रबलैरपि मेबलैः सहसा विजेतुं न सुशक इति निश्चिन्वानः सकूटनीति विज्ञानः तस्य सेनायां विद्यमानान् यवन सैनिक जनान् समनुकूल्यहन्त कृतप्रस्तैः प्रवृद्धशक्तिः नैघृण्य कर्मप्रसक्तिः, कृतकृत्यता मुपलेभे। भारतवर्षस्य हतभाग्यतया स क्षत्रियकुल चूडामणिर्यवन लोकनिन्द्य कृतघ्नताऽनभिज्ञतया तत्र परैर्निः शङ्क युध्यमानःस्वीय भूतैरपि तैःपर वंशोद्भूतैः परितः प्रहृत्याऽशीति व्रण पूरित विग्रहो व्यधायि। अयमपितस्यैव बब्बरमहोदयस्य पौत्रोऽस्त्येक तरोयामपि महाराज विषये दुर्भावनाँ भावयेत सैव लघीयसी स्यात्।

पिता महोमेऽस्य पितामहेन, विरोधितोऽयंमयि वैरिभावः।
नाद्यापिमांमानयतीतितस्य, म्लेच्छाधिनाथस्यनृपेऽत्रमन्युः॥६७॥

अहो धार्ष्ट्यं परेषाम्!

पर प्रदेशं खलुहीनवृत्तयः, प्रविश्ययुक्त्या हृतसाधु वृत्तयः।
वशीकृतानात्मविदुर्विबल्लभाः, प्रभुत्वमिच्छन्तिमहाजनेष्वपि॥६८॥

किं पृच्छयते मित्रविरोध कारणं, स्वार्थो पपत्तौरतमानसानाम् ।
विनापराधं ननुतद्विधानां, स्खलन्ति साधुष्वपि मान सानि॥६६॥
दास्या:सुताहन्त परेपरेत्र, लोकेसदानस्थ तयाध्रियन्ते ।
सखे भवेयुः सरल स्वभावाः, एतेकथं कारमनार्यभावाः ॥७०॥

अहो कुतस्योऽयं न्यायो यत्पूर्वं प्रतिरोधका इव येऽत्र दुर्बल बलनरेशान् प्रदेशान् समेत्य विततया निर्दयतया विलुण्ठ्य लटक मेलकनिदेशान् स्वान् स्वान् देशान् सम्पन्नयन्तिस्म । ततः पारिस्परिक कलहमात्र विदग्धान् नाना व्यसनव्याल दग्धान् कर्त्तव्य पालन विमुखान् मातृमुखान् क्षत्रियान्वय कलङ्करूपान् काँश्चन भूपान् वशीकृत्य सर्वत्राऽविश्व प्रभुत्वं प्रकाशयितुमिच्छन्तः सन्तोऽप्यसन्तः श्रीमन्तं महाराजमपितु स्वायत्तीकर्तुं वावश्यमानाः प्रतीयन्ते । अस्तु किमति पल्लवितेन करुणावरुणालयः स भगवान् गङ्गाधर एवास्य आर्यजातेः सन्ताप संस्कर्ता कानन विहारिणो नो बहुकालो व्यतीतः । संप्रति राज सभमुपेत्य महाराजस्य निश्चय विशेषोऽवगन्तव्यः ।

इति श्री प्रताप चम्पूकाव्ये
द्वितीयो निश्वासः ॥



# अथ तृतीयो निश्वासः ।

भुवन तोयनिधौ बहुदुर्गमे, षडरिवर्गभयानक जन्तुके ।
विषय दुःख जले पतितं जनं, निजदयोद्धुपतो ऽवमहेश्वर ॥१॥

तदाकारिता सामन्तादयः

समधिगम्य निदेशमथ प्रभोः, शुभरुचेरुचिरोद्यम शालिनः ।
सकल युद्ध कलाकलकौशलाः, सविनयं समुपागुरुदायुधाः॥२॥
प्रथित शौर्य्य गुणाः प्रगुणोद्यमाः, समिति वैरिविभातयमभ्रमाः ।
विविध वेश विभूषणभूषिताः, शुशुभिरे सुभटारण कर्मठाः॥३॥
समवदन् प्रणिपत्य नरेश्वरं, प्रकृति रञ्जन कर्मकृतीश्वरम् ।
कथयनाथ किमर्थमये ! वयं, भगवता स्मृति गौरविणः कृताः॥४॥
किमपि कार्य्यमनन्त गतेस्तव, यदि भवेद्भव तुल्य पराक्रम ? ।
मितदृशैरपि साध्यमिदं जनै, स्तरति मर्त्त्यं निगाद्यमसंशयम्॥५॥
वितरतिस्म स यस्यकृतेहरिः, प्रभुवरेश्वरतां तपनस्तथा ।
परमहश्च फणाधिपतिः स्वयं, परतराश्चकलाः सकलेश्वरः॥६॥
किमिव कोऽपि रिपुर्भवतः पुरः, समुपगम्य भवेद्धृतकन्धरः ।
खगपतेः पुरतो ऽपि कदाचन, कुशलमृच्छति किं पवनाशनः॥७॥
अन्यस्यदूषणकथांप्रतिभूपमूक,स्त्वंतत्प्रशस्तचरितोक्तिषुजागरूकः
लाभेपरस्यसतिकिंनविभर्षिमोदं,हानौचकिंनहिविभोधरसेवितोदम्
दोषेकृतेऽपिभगवँस्त्वमयेदयालु, दंण्डप्रयोगसमयेसुकृताऽशयालुः
लोकस्यलोकपरिरक्षणबद्धकक्षः,कष्टंबिभर्षिनितरामरिमानलक्षः॥९॥
नीतिप्रियोयुक्तविधानकारी, कारुण्य पीयूष निधिः शठारिः ।
कस्त्वत्समो भूमितले महीपस्त्वंराजसे राजजगत्प्रदीपः॥१०॥
इत्येवमावेद्यभटा विनम्राः, सल्लक्षणास्ते जयलब्धिकम्राः ।
यदाविरेमुः प्रभुभव्यकामाः, स्वदेश सेवा व्रतिनोप्यकामाः॥११॥

असौतदामान्य वरो ऽरिनाशः, प्रतापभूपो भुवन प्रकाशः ।
गम्भीरभावः सुमनावदान्यः, शूरोचितांवाचमुवाच धन्यः॥१२॥
उद्दण्ड लोकैः सह मित्रतायाः, सुस्वप्नमुत्पश्यति योविवेकी ।
किं तन्मतेनाऽस्ति यथार्थमेततपपीलिकाचुम्बतिचन्द्रविम्बम्॥१३॥
वीरा दुराशा यवना यदेते, हा! भारते नः सुषमासमेते ।
कुर्वन्त्यनिष्टं ननु सज्जनानां, सह्यंकथं तत्खलुमज्जनानाम्॥१४॥
वैरायमाणा दुरदृष्टयोगाद्यदासमागुः कुमतिप्रयोगाद् ।
तदाप्रभृत्येव दयाविहीनाः सन्त्यस्मदीयत्तयकर्मलीनाः ॥ १५ ॥
सद्धर्मतत्त्वावगमप्रसाराः संसारकल्याण महोपकाराः ।
मतान्धतादोषवशै र्दुराशैर्दग्धानिबन्धाबहवः पलाशैः ॥ १६ ॥
गो ब्राह्मणानामपि भूरि हानिः, कुलाङ्गनानां निकृतिर्व्यतानि ।
यैर्दुमदैस्ते यवनाभवद्भिः किं, नापमान्या समितौवलद्भिः॥१७॥
भग्नानियैर्हन्त मनोहराणि, रम्याणि पुण्यामरमन्दिराणि ।
महापराधेषु परेषुतेषु, प्रीतिः कथं स्याद् विषमाशयेषु॥१८॥
अद्याऽपिये स्वार्थरसारसाया, उद्भावयन्ते बहुभूरिमायाः ।
अत्याहितंसज्जनदैत्यकल्पाः, क्विन्तेहिताःस्युःश्रितहेयतल्पाः॥१९॥
निष्कारणं चण्डहृदः कुवृत्ताः, सद्धर्म मुन्मूलायतुं प्रवृत्ताः ।
ये तैः समंसन्धि कथाऽपिनेष्टा, कर्त्तुं भटाधर्मधनैर्वरिष्ठाः॥२०॥
सवश्चको दिल्लिपतिः प्रमूढः, साम्राज्य वृद्धिं तनितुं निरूढः ।
अस्मान्वशीकृत्यनिजाधिपत्यं, विधित्सुरेतन्नहिवितथसत्यम्॥२१॥
अस्मासु जीवत्स्व ऽपि चेद्विपक्षः, सिद्धाभिलाषोऽत्र भवेद्दुरक्षः।
वेदोक्त धर्मस्तु तदावराकः, किमाश्रयः स्यात्ततदुर्विपाकः॥२२॥
शुद्धान्वयोद्भूति युजोऽपिभूभुजः, सकूटनीतिप्रथनस्फुरद्भुजः ।
संवन्ध संवन्धनतो निवध्य, फलप्रयत्नोऽजनि सोऽप्यवध्यः॥२३॥
सद्धर्म विद्वेषपरा अनर्थं, परेन कं कं तनितुं समर्थाः।
पतिव्रतानामपि मानिनीनां, कृतो निकारो बतभामिनीनाम्॥२४॥
यद्रक्षणेदत्तसदावधानाः, शूरा अनेके भुवि कीर्ति गाना ।
संग्राम कुण्डे ऽसु हवींषिहुत्वा, स्वर्गंप्रयाताःश्रितदेवयानाः॥२५॥

साचित्र कूटोत्तम नामधेया, युष्माकमेषा वत राजधानी।
म्लेच्छाधिपत्येध्रियतेऽधुनानः, कान्यापराऽतःखलुमानहानिः॥२६॥
रात्रिं दिवं योऽरिरुदीर्णदण्डः, सभ्यापमानार्थलसद्वितण्डः।
म्लेच्छः कथंचारित कूटनीतिः, सोपेक्षणीयोभवतां कुरीतिः॥२७॥
यस्मिन् कुलेराक्षसकक्षलावः श्रीरामचन्द्रोऽजनिदेवभावः।
तस्मिन् जनिं प्राप्यकथं निकारं, सहेऽरिजातंभृशहृद्विकारम्॥२८॥
सज्जोस्मिनूनं प्रतिपक्षपक्षं हन्तुं, भटास्तं भवतां समक्षम्।
मदन्वितैर्यै युधियोधनीयं, मध्येसभंतैरपि बोधनीयम्॥ २९॥

चतुष्पादिका छन्दः—

निजपूर्वजजनकलित निवासां तद्विक्रमभर बोध विलासाम्।
जगतीतले महामहनीयां दूये दृष्ट्वातांदयनीयाम्॥ ३०॥
बप्पारावल वलवलिताभां महीपद्म पद्मापरलाभाम्।
खिद्येयां दृष्ट्वा प्रतिवेलं तत्प्रति प्रतिकृतेऽद्य घटेऽलम्॥ ३१॥

यस्या रक्षाकृते वीरलोक मूर्धन्याः स्वनाम धन्या त्रिशत्संख्याविशिष्टा महाशिष्टाः परैः सम्पादित प्रशस्त भूरिजन्या राजन्याः परित्यक्त देहादिसंमोहाः ससमारोहाः स्वर्गस्थिति भाजोबभूवुः स्वजाति कुल प्रतिष्ठाकामाः, प्रगुण गुणगणाभि रामाः, परमकुलीनामामकीना नवमातरस्त था ऽ नेके समाश्रित दरहराः कृतसपत्न निरादराः, सहोदराभ्रातरः स्वसमानमानः शौर्यादिगुणनिधानैः समभ्यस्तराजनीति समयैरन्यराजन्य तनयैः समंयद्गौर वनिमित्तं स्वर्गं प्रति प्रस्थितिमकार्षुः। तस्या अपि अमुष्या जन्मभूमेर्नो ऽ पकर्त्तां मयिजीवति सत्यपि सानन्दो भुविस्थातुमलंस्यात्।

अहोयो कदाचिद् ऊर्ध्वस्फुरन्मणि दीधितिध्वस्तान्धकारा, अभ्रंलिहसौध पङ्क्ति निरुद्धहेलिरयन्दनवाहनसंचारा, परितोनन्दनभूरिव सुमनो भूयिष्ठा, यज्ञवेदी व ब्रह्मसमूह विशिष्टा मानसभूमिरिव राजहंस समुदायसंगता, वनीव गजराजि राजिता, सरसीव कमलवनविभ्राजिता, चित्रशालेव विचित्र चित्रशालिनी, अनेक दिव्य देवधाम मालिनी मालिनीव ससरोज सरोन्विता भातिस्म, सैवा ऽ द्ययवना श्रिता सती जाजिकेव सौभाग्यसम्पत्ति शून्या न दृष्टिं प्रसादयति।

आसीच्चया वीरवती कदाचित पूर्वं पुरारातिकृपारसेन।
दिवोऽपिदिव्याद्भुतवस्तुयोगाद्हासाऽपिशोच्यायवनाभियोगात्‌॥२

या च कदाचिद् विजयस्तम्भ हस्ताद्धेलित नाकोच्छ्रायस्मया सद्रत्न दीधति विकाससस्मयां, अनेक सुकुमार कुमाराधिवासा रूप लावण्यधाम ललनाललामनिवासा, सुमनः सौरभनन्दना, संक्रन्दन नन्दन हूलिता, वनस्पर्द्धा निबन्धनवना, विचित्रचित्रैः संवलिता, नानाविधास्तमोत्तम सुखसाधनो महापराक्रमशालि राजालि विराजमान प्रासादा दृष्टि मात्रसम्पादित दर्शक जनप्रसादा सविशेषं बभौ, हाहन्ततस्या परस्या अधुना गोमुखादि प्रमुखानि सुखावगाहनानि तीर्थ स्थानानि श्री पद्मिनी प्रभृति सतीनिवास धन्यानि महापुरुष राजन्याधिवास मान्यानि सुन्दराणि सुन्दराणि मन्दिराणि चाऽपि महामहैर्य वनाप सदैरधिष्ठाय दूषितानि, नाना प्रकाररत्न जातखचित कपाटदीप्ति परिभूत तिमि राणितद्द्वार एयपि नाऽद्य विभूति लोचन वृन्द लोभां लोकोत्तरां शोभाम्, या नन्दनाय मानोद्याना सुरभिमन्द शीतलवायु वाना, सुमेरु शिखरोपमसद्ममाला, अन्तर्निविष्ट विशिष्ट रत्नो द्योतोत्प्रोतान्तराला, व्योममञ्जरी शोभित चन्द्रशाला, कालाराति समर्चनकारि भूपालै कपाला, व्याकोशपाथोज दीर्घिकाशालिनी मालिनीव ससारा सन्निहित सुकुमार कुमारा शोभतेस्म ।

यस्यां च निगमागम पाठ क्षपितमनोमलाः शिवध्यान संयापितसन्ध्याशेष कलाः, अमरावत्याममरा इव शक्तिविशेषभाजः पण्डितराजः सुकृतधुरन्धराः क्षितिसुरा अभवन् ।

सैवनः पूर्वजयशः पताका चित्रकूटभूमिमाता ऽस्मद्‌भाग्य वशादुद्दण्डयवन पादाक्रान्तत्वाद् विनष्टरामणीयकविभूतिः, परितोविधूतसतीकाय निकायभूतिः श्मशान प्रायेवकस्य विपश्चितः पश्यतश्चित्तं न सन्तापयति । जननी जन्मभूमिश्च स्वर्गादपिगरीय सीतियथार्थरचनंवचनं स्मृतिपथ मधिष्ठाय नितरामेवक्लेशयति नः । अनुवेलमेव स्वदेशदुर्दशां विलोकमानः स्वकर्त्तव्य विधौदत्तावधानः किनाऽधंजनो विषीदति किंवा स्वप्नेऽपिजातु प्रसीदति । अहोस्वर्गादपि यस्याजन्म भूमेर्गरीयस्त्वं प्रत्यपादि अविसंवादि, साऽद्य शत्रुवशंवदतावशात्प्रगत प्रसादा विततविषादा विप्रयोगिनी राजमहिषीव, कुह्नुरावलिवलिता प्रातः सन्ध्येव कठोरकरिकर विमृष्टामृणालिनीव, अशिशिरकर करनिकर संसृष्टाकैरविणीव, झञ्झावात विसंष्ठुला रङ्गस्थलीव, सैरिभभविलोडिता सरसीव, शाखामृग प्रलून प्रसून संपत्तिर्वाटिकेव, शलभव्रात विलुञ्छितसस्या क्षेत्रराजीव, हिमानीपात

मूर्छिता, कन्दरिकन्दलीव, सूक्ष्मदशापश्यतां केषांविपश्चितां चेतोनखेदयति, हन्तयस्याः सर्वत्राऽपि जगतिसमभवत्संभूति विभूतिः तस्यापि संभूताऽधुना सँभूतापराभूतिः, तत्किनाऽत्र कालस्यलीलायितं, यद्वास्मद्भाग्यविपर्य्यास विलसितमिति, किमतिपल्लवितेनभुत्सु-कर्त्तव्यपालनाऽवसरेकृतं वदावदतया, अहंतुपूर्वमेवयन्निर्णीतवांस्तदेव भवतामवधान प्रसंगाय पुनरपिसमुक्त कण्ठंस्सकरोत्क्षेपंच संगिरामि।

यावन्नमे जन्मभुवोविमुक्ति, स्तावत्कथंचारु रस प्रयुक्तिः ।
ध्रियेमृताशौचधरो नितान्तं,विनारिनाशंक्वमनो निशान्तम् ॥३३॥
यदत्र निर्धारणमस्तिवः सतांनज्ज्ञातुकामंन नमासकंमनः ।
विशेषविचाऽपि विनिश्चितेस्वयं,किंगोचरेना विशयंव्यनक्तिनो३४॥
अथ प्रवीरारिपु दारिजीराः, स्वजातिहीरा सकलाः सुधीराः ।
प्रत्यूचुरानम्र मुखा रणोत्सुकाःस्वकाधिपादेशधरा धराधिपाः॥३५॥
त्वद्भाषितं नाथ परंवलीयः, प्रतापएवासिमहीतलीयः ।
पुरारिराद्यः सकला भिवाद्यः, करोतुतेमङ्गल मद्यसद्यः ॥३६॥
धन्योऽसि वीरत्वमये जगत्यां, लोकोत्तरख्यात यशोवृहत्याम् ।
स्वजन्मभूमेः प्रतिपत्तिकामः, कालेऽद्य सज्जीभव सीतिनाम॥३७॥
दुरात्म विद्वेषि विनाशनाय, सद्धर्मनिष्ठ प्रतिपालनाय ।
भवादृशां साधुदृशां नृपाणां, जन्मात्रलोके प्रथितप्रभाणाम्।३८।
स आर्यजातिं कुटिलाग्रगामी, कामीश्वरो म्लेच्छवरोऽद्यवामी ।
विलोप्ययुक्त्याथवत भारतं सः,स्वकाधिवासं तनितान्नृशंसः॥३९॥
तयोनिसम्बन्ध विधानपूर्वं, शनैः शनैः क्षत्रिय वर्गमद्य ।
दृढ्यो वशीकृत्य निजाधिपत्यं, सत्यविधातुं घटतेऽनुघस्रम्॥४०॥
न जायते यावदसौकृतार्थ, स्तावद्विधेयोभवता पुमर्थः ।
यथाबलं विश्वजनीनवृत्ते, सज्जावयं चाऽपि तवानु वृत्ते ॥ ४१ ॥
संग्राम भूमौरिपुलोक नाशं, कुर्वन्कृतीयोवपुरुज्जहाति ।
वीरः सदेवैरभिनन्द्यमानः, क्षिप्रादभुतं स्वर्गपदं प्रयाति ॥ ४२ ॥
इत्येव निश्चित्य सदारणाथ, सज्जीभवन् राजतिराज लोकः ।
शय्यामृतिंवष्टि न जातु कश्चिद्भवादृशो वीरवरो विपश्चिद्ः॥४३॥

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथ तत्रस्थिता: स्वजाति देशहित प्रवणता सुव्यवस्थिता, अन्येऽपिकेचनो द्दण्डविरोधि पथप्रकूपाः प्रसिद्धरूपोभूपाः, यथा क्रममुत्थाय साञ्जलिबन्धं प्रणतितति विधाय प्रतिज्ञातुमारेभिरे।

सालम्बाधिपमहा प्रतापः, संग्रामाङ्गण प्रतापः।
श्रुत्वातत्संधामतिहर्षं, लेभेदधद्वीरतौत्कर्षम् ॥४४॥

प्रतिजज्ञेऽथवैरिकुलनाशं, कारयितुं समपुरः प्रकाशम।
उचितमेव तादृक्त्व भटानां, निराकरण करणं हिशठानाम् ॥ ४५ ॥

यन्मुख्य शूरो जयमल्ल नामा, स्वदेशरक्षाश्रित देवधामा।
आसीत्कथं मान धनस्य तस्य, माभूत्तथा शौर्य रुचिर्भटस्य॥४६॥
यद्वीरवालोऽद्भुत देशभक्तिः, फत्ताभिधो दर्शित दिव्यशक्तिः।
दोर्दण्ड दम्भानपि कामपूरान, संत्रासयामाससपत्न शूरान्॥४७॥
तेचाऽपि रान्यवरा स्तदानीं, केलावराय च्छुभ राजधानी।
औदण्ड्यभा जां मुगल प्रभूणां, मतिंबबन्धुःक्षतये रिपुणाम्॥४८॥
दालावारीवासि नृपलोकाः, कृत संग्राम वैरिगण शोकाः।
वीर समाज यशो विस्तारा, स्तत्राद्भुत संगर भाराः॥ ४९ ॥
ते ते नृपा भारत रत्नभूताः सपत्न वृन्दारक मृत्युदूताः।
प्रत्यर्थि नाशाय समन्यु चित्ताः सँधांन बन्धुः प्रतिपति वित्ता ५०।
प्रतापिनस्तस्य दृढ़ व्रतस्य, सहायतादान कृते नृपस्य।
कृत प्रतिज्ञाः समितौ महान्तश्च काशिरे दिव्यगुणैर्लसन्तः॥५१॥
महान्ति कष्टान्यपि देशसेवा, कृतेकृती ना ननुसंसहन्ते।
त एवलोके ऽत्र यशः परत्र, सकल्प कल्पं प्रमदं भजन्ते॥५२॥
तेषांजनुर्धन्य तमंतएव, स्थिरां प्रसिद्धिं जिहते सदैव।
तैरेव तज्जाति रुपैति मानं, कुर्वन्ति ये जन्मभुवः सुमानम्॥५३॥
विपत्तिकाले ऽपि महानुभावः, शत्रु व्रजंयोविकली करोति।
सखराजन्यकुल प्रदीपः सत्य, प्रतिज्ञस्त्वमिवार्चनीयः ॥५४॥
शत्रुं समाश्रित्य कलङ्कभाजं ये, केऽपि राजन कुशलाभिलाषाः।
जीवन्ति तेकिंनभवान्तरेषु, भवन्ति दुःखावलिभाजनानि ॥५५॥

CC-0. Gurukul Kangri Collection, Haridwar

**इत्यादिवीरोचितवाग्विलासं यथाक्रमं ते क्षितिपालसिंहाः।**
**विधाय सूर्यान्वयलोकहीरं प्रातुष्टुवुँस्तं भुवनैकवीरम् ॥ ५६ ॥**

ततः शूर वृन्दारक वृन्दकीर्तनीय विक्रमः, विक्रमादित्य इव संस्तुत दिव्य कार्यक्रमः सुकृत सुकृतमतिः प्रतिज्ञात प्रत्यर्थिसार्थ दुर्गतिकृतिः, श्रद्धाभक्तिभरनिचितं वीरजनोचितं समेषामपि :तेषाँ लोकोत्तरमिव प्रत्युत्तरं समुत्साह संपत्तिकारं वैरायमाण प्राणप्रयाणानुकूल सामर्थ्यधरं समाकर्ण्य, संजातसन्तोषः, उद्दण्डप्रचण्ड सपत्न दुष्प्रयत्नानुस्मरण प्रादुर्भूतप्रभूतरोषः,भूयोऽपि तान् स्वदेशानुरागसहितान् प्रमादादिदूषणरहितान् हितानुदिश्य न्यगादीत्–अयि श्रीमन्तो बुद्धिमन्तोरिप्रतिकारचतुराः क्षात्रधर्मधुरन्धराः सुविकरालेऽत्रकाले स्वदेशादुर्दशामनुभवद्भिर्भवद्भिरिह संभूय मदुपरि या सहायता प्रदानप्रतिज्ञा वचन प्रकाशनरूपा दया प्रादुरकारि तत्कृते यावन्तोऽपि भवत्प्रगुणगुणानुवादा धन्यवादा दीयेरंस्तावन्त एव न पर्य्याप्ताः प्रतिभान्ति भवदागमनसंभवाः।: संमदाश्च मे चेतः स्थले न मान्ति। येषाँयशोधनैः सदासंपादित वैरिवृतनिधनैः शौर्य्यकार्य प्रकाशनरतमानसैः परोपकारैकरसैः स्वदेश जातिधर्म परिष्टिकुशलैर्धनुर्वेदरहस्यमकरन्दास्वादभसलैः सुविशालभुजैः पूर्वजैः पूर्वमपि क्रूरस्वभावारातिवल संहारं कारं कारं स्वप्राणैर्वियुज्यापि स्वदेश सेवा व्रतं प्रकटीकृतम्। तेषामेवात्रभवताँ कुलाङ्कुराणां.वीरवर पुरः सराणां तस्या एव पुण्यभुवोरक्षा कृते शुभावह विचारधारा किं नास्ति साधुसंचारा। यद्यपि वयमिदानीं प्राप्ता बहुहानिं शत्रुजनापेक्षया सर्वेष्वपि साधनेषु समूनास्तथापि यतो धर्मस्ततो जय इति वचनानुसारं धर्मपरतया नैभ्योमनागपि विजयसंभावनायां न्यूनाः। येषां परसत्त्वापकर्षणे दुर्विवाको हेवाकः, परकामिनीकामनायां व्यसनि व्यवस्थितं दुराभिलाषितं दुर्वलपक्षशातने च सभ्यता निरसनं शूरताभ्यसनं, ये च दुराभियोगाः कौशिका इव दोषोदयोद्योगाः, वृका इव हरिण हृदयोपभोगाभिलाषाः काका इव विषमदृष्टयः, शृगाला इव वक्रकतापरीता, व्याला इव महाविकरालाः, वका इव रम्यदर्शना अपि हिंसारसाः, सर्वशक्ति सम्पन्नाः अपि नाधिकारस्तें धर्माचारपेरभ्यः परेऽस्मभ्यः। अस्तु कर्मण्येवाधिकारस्ते मा फलेषु कदाचनेति श्रीमदर्जुनं प्रति भगवता विज्ञानवता धर्मोपदेशवितन्द्रेण श्री कृष्णचन्द्रेण युक्तिप्रमाण विशिष्टं यदुपदिष्टं तदनुरूपमेवमयापि तत्र भवति भगवति विश्वस्य सन्देहजातं च निरस्य स्वजातिकुलोचितं कार्यं कर्त्तुमुचितम्। इति निश्चत्य यावच्चित्रकूटभूमे र्नः संभवभूमेः सुमङ्गलयुक्तिर्विमुक्तिर्नभवति तावदहं श्मशानमानाया अस्यामृताशौचमाचरन् राजोचितभोगसामग्रीं नैव रोचयामीतिप्र तिजानामि

यावद्वीरप्रसूः सा म्लेच्छाधिपत्य कलङ्क कलङ्किता स्वातन्त्र्यतन्त्री विनोदोदयमन्त्रपूता सती भूतपूर्वा तामपूर्वां सभीकतां न बिभर्ति यावच्च परमांस पुष्टपुद्गलं मुद्गलं गलेगृहीत्वा देहलीतो न निष्कालयामितावत्पत्रालिभोजनः, तृणशय्याशयन प्रयोजनः, अवाद्यप्रस्थानः, प्रत्यादिष्ट पुरः प्रशस्तिगानः। पर्णकुटीर निवासः सकल प्रमोदोत्सव-निरासः, श्मश्रुकूर्चकलना रहितः, शोकावसरोचित व्यवहारविशेषसहितश्चध्रियेय। इतिसुदृढसन्धः संविहित साधुतरप्रबन्धः संधाय नगरनिवासं परिहाय, वनीव पर्वत-वनभुवमध्युवास मनस्वितोत्कर्षी स राजर्षिः। तस्मिंश्च तथाविधव्रतपालनतत्परे भूमीश्वर प्रवेर तस्य प्रजा अपि स प्रजास्तमेवानुसस्रुः। अहो महाराजस्य सुवृत्त्या विस्मापित जनसमाजस्यास्य लोकोत्तरस्त्यागो यच्चिराभ्यस्तविषयेष्वपितथा विष्कृतो विरागः, समाश्रितश्चानेन विषमागभूभागः। प्रशस्तव्याप्तिसमनुकूलित बन्धुबान्ध-वादिवर्गः, अश्रुतपूर्वतथाविधनिसर्गः, विचित्र गौरव रक्षण नीतिः, विध्वस्तलोक-संभावितापत्तिभातिः शिक्षिताभिमानगोपन रीतिः क्षमानाथोऽयं दयासिन्धुः सज्जनमनः कुमुदबन्धुः केषां न तदानींतनानां महामहिमभृतां महीभृतां मध्ये प्रख्यातयशा नाभूत् अथ शक्ति सम्पादन कामः कर्त्तव्यपालनाऽविरामः, रामइव दृढ़ प्रतिज्ञः, विगमागम-सारविज्ञः, शत्रुमनः संतापः स प्रतापः, सुकुमार विग्रहोऽपि विकटविग्रहः सुन्दर-वर्णोऽपि अभिचार कर्मणिप्रयुक्तमन्त्रइव भयावहतां बभार। तथाविधंत स्यसहापुरुषस्य विनिश्चयंविजानानाः, तदनुरूपकार्यं कर्त्तुं प्रतिजानानाः, महाकुलं नाः स्वदेशापत्ति निवृत्ति चिन्ता संतानलीनाः, सपत्नवारिवाह समीराः, वीरा अपि परिस्फुरन्तमिव दुर्हृदं दुर्हृदं विलोकं विलोकं क्रोधकषायितदृष्टयो विकृताङ्गा भुजङ्गा इव दुरुपस्थाना बभूवुः दैत्यसंहाराय सेनानी सेनानी संगता सुरसेना इव तदनुगताः क्षत्रियभटास्तत्र नितरां शुशुभिरे।

केचन कुन्त शोभित कराः, अपरे चन्द्र हसित पाणयः, अन्ये लासूल्लसित-शयाः, केचित् कोदण्ड मण्डित पञ्च शाखाः, तथेतरे परघातन परिघातायोधन-शालिनः, ततोऽन्येद्विनालिका सर्वदाशल्य शूलमुद्गरधारिणो वयमपि भवदनु-यायिनः आशरीरपाटं देश सेवाव्रतं धारयिष्याम इति मध्ये समं समुत्थाय सकरो-त्क्षेपं भूयो भूयो निगद्य तं प्रमोदयामासुः। यथावसरमेव भवता वयं स्मृतिपथं नेया इति निवेद्य तदनुज्ञाताः समन्तादिशूर व्राताः स्व स्वस्थानं प्रति प्रस्थितिं व्यधुः। तदा च प्रसीदता महाराजेन तान् प्रत्युक्तम्।

वीरा भवद्भिर्धृतजातिगर्वै, यद्देशरक्षाव्रतमद्य सर्वैः।
सन्धार्यते दैत्यविनाशकेतु, स्तदेकलिङ्गः सफलीकरोतु ॥ ५७ ॥
धन्या नरा नश्वरमात्मदेहं, सानन्दमायोधनपुण्ययागे।
कृत्वाहुतिं नेककल्पवर्ति, यशो विसृज्यात्र रविं विशन्ति ॥ ५८ ॥
वीराङ्गनायां जनिमेत्य नूनं, यो भीरुता दोषवशाद् विलज्जः।
संत्रस्य शत्रुं शरणीकरोति, धिकृतं महानीचमकीर्तिभाजम् ॥ ५९ ॥
विलासितावश्यमनाः शठोयः, पतिव्रतानामपि पापबुद्धिः।
भङ्क्तुम् व्रतं हा नवरोजसंज्ञं, प्रचारयत्युद्धवमङ्गनानाम् ॥ ६० ॥
कामान्धितस्तत्र सुगुप्तमेव, कृत्वाङ्गनावेशमसौ दुरात्मा।
प्रवेशमासाद्य विलोभ्य युक्त्या, कारिचत्ततः पूरयतेऽभिसंधिम् ॥
एवंविधस्यास्य नराधमस्य, दुश्चेष्टितं म्लेच्छजनाधिपस्य।
किं सोढुमर्हन्ति महानुभावाः, शूराः कदाचित्सुकृतप्रभावाः ॥
भवादृशां भव्यदृशां भटानां, जन्मात्र जातं परमोत्कटानाम्।
तादृङ्महापाप विनाशनाय, समं तथा मंगलभावनाय ॥ ६३ ॥
अतो भवद्भिः कुटिलस्वभावः, सशासनीयस्तरसैव जाल्मः।
संरक्षितो रक्षति यःस्वरक्षं, सधर्म एवास्ति सहायको नः ॥ ६४॥
राजा मतो धर्मपिता प्रजानां, तथैव दुर्वृत्तिधरोऽधरोऽयम्।
तत्पुत्रिकालिंगनपातकीव, दण्ड्यः स उद्दण्डतमो भवद्भिः ॥६५॥
यद्भारतं सर्वजगत्प्रकाशं, धर्मप्रधानार्यजनाधिवासम्।
तत्रापि हा हन्त रिपुर्विशङ्कः, पुरोऽपिनोऽनर्थपरो म्रियेत ॥ ६६ ॥
यत्पूर्वजा धर्मधनप्रतिष्ठाः, शूरा धनुर्वेद विदां वरिष्ठाः।
देशान्तरस्थानपि दुर्व्यवस्थान्, स्वस्थान् व्यधुः केवलविक्रमेण ॥

अनित्यो देहोऽयं विलसति सदा नैव विभुता,
दुराशः कीनाशः कवलयितुकामोऽतिबलवान्।

समभ्येति प्राज्याक्रमणरसिकः सर्वदमनः.
ततो रक्षाहेतुं सुकृतमिह विज्ञा अभिदधुः ॥ ६८ ॥
न युद्धादन्यद्वापरमिह कृते नः समुदितं,
भटाः प्राज्ञैः पूर्वैः सुकृतमरिविध्वंस सुलभम् ।
मृतौ सत्यां तत्र स्वरूपगतिरानन्दभरिता,
रिपोर्नाशे तस्याखिलविषयलब्धिश्वनियता ॥ ६९ ॥
पुरा वारं वारं कुटिलमतिभाजां मदजुषां,
द्विषां ये संहारं भुवनविदितोदारमतयः ।
स्वभूमे रक्षायै विपुलयशसो वाञ्छयरचयन्,
कुलेतेषां येषांजननमभवत्तत्रभवताम् ॥ ७० ॥
सतां वः सन्धायाः किमिव भवतूद्दामयशसां,
भटानां भङ्गोऽत्र प्रतिभटभियो जातिमणयः ।
अयेकिंपारीन्द्रा अपि गजघटाध्वंसनरसाः
तदग्रे जायेरन प्रकटितभयाः शौर्यनिलयाः ॥ ७१ ॥
इत्येनं विनिगद्य हृद्यवचनः श्रीमेदपाटेश्वर,
स्तान सर्वानपि भूभुजः पृथुभुजान्संतुष्टचित्तांस्ततः ।
संदिश्याहितवृन्दसूदनमतीन्गन्तुं समाज्ञापयत,
स्वीयांश्चपि यथाभिलाषकृतये विश्रामधामागमत् ॥ ७२ ॥

इति श्रीमहाराज प्रताप चम्पू काव्ये मन्त्रवर्णननिरूपस्तृतीयो निश्वासः ॥

# अथ चतुर्थो निश्वासः

—०—

यन्मायैव जनितं परमार्थशून्यं
यत्सत्तया जगदिदं प्रतिभाति सत्यम् ।
वेदान्त गम्यमपि केवलबोध रूपं
तद्ब्रह्म नौमि सकलाजरलोक भूपम् ॥१॥

अथ नीतिशास्त्रविशारदगुरुजनानुमत्या समस्तसामन्तमन्त्रिवृन्दवृन्दारकसंमत्या परैर्दुरभिगमनीयं परमरमणीयं-समनुकूलवारिसमीरं कमलमीरं नामनिर्विपदं पदं राजधानीं विधाय गुण्डादिपर्वतीयदुर्गजातं च सुसज्जितं निर्माय दुर्दान्तशत्रुव्रातोत्पातविनिपातक्षमबलं बलंच तत्रसंजग्राह । अहोबुद्धेर्वैशद्यंतस्य भूमिबल्लभस्य यद्वैरायमाणशक्तिपरिज्ञानपुरःसरं स्वात्मसारं विजानानः कर्त्तव्याकर्त्तव्यविवेचनसावधानः समयविशेषप्रतीक्ष्यः स प्रतीक्ष्यः प्रत्यर्थिलोकाक्रमणशङ्किताधिवासं समतलभूमिवासं-परिहाय तथाविधां तां दुर्गमदुर्गभुवंवस्तुं रोचयामास ।

तदीयवात्सल्यादिगुणानुरक्ताःपर्य्याप्तशौर्य्यप्राप्तिसमुद्योग संसक्ताः शक्ताभक्ताश्च सप्रजाः प्रजाअपि मन्दरमन्दिराणीवमनोहराणि निवासभवनानि भूमिवर्द्धनानि कृत्वा तेनैव सहसमेत्य तत्रैवसुखंन्यवात्सुः ।

युक्तंचैतद्—

यो भूमि जानिः सुत निर्विशेषं
प्रजाः सदा रक्षति वीततन्द्रः ।
तास्तं पुनस्तद्गुणलुब्धभृङ्ग्यो
विपत्तिकालेऽपि न सेत्यजन्ति ॥ २ ॥

सचाकरोगुणरत्नानांसमाश्रयोविश्वोपद्रुताश्रयाणांसुधामधाम्नांसदनंश्रियामपुरंपुरुषार्थस्यगृह्योगुणवतांप्रगृह्यंसज्जनानांस्रोतः करुणारसस्यअवतारोवीरतायाः,विधेयोविदुषाम्,विनेतासमुद्धनानाम,शरणंशरणार्थिनाम,कल्पद्रुमोपाचकानाम,प्रसादयितासुहृदाम,विषादयितादुर्हृदाम, तत्रविषमस्थानेऽपि निवसंन्नचिरेणैवकालेनप्रबन्धसौष्ठवव

शात् सम्पन्नशक्तिसंचयः,सम्प्राप्ततत्रत्यलोकविशिष्टपरिचयः संकल्पितस्वल्पेतरभोग-साधनः,सदभिमानधनः,स्वःसुरेश्वर इवसानन्दंकालं यापयाम्बभूव ।

तथैवास्य प्रजाः सर्वाःस्वामि भक्ताः सविक्रमाः ।
नाकिनामिव संमोदं दधुरुद्वेद निर्भयम् ॥३॥

दुर्भाग्यदूषितमतिः किलकोऽपिधृष्टः,
श्रुत्वा निदेशमपि धन्वपुरन्दरस्य ।
जावाल उद्धतमना न जहौस्ववासं,
शूलप्ररोहणफलं समवापि तेन ॥ ४ ॥

यो धर्म संगतमनाः करुणा निधानं,
रात्रिंदिवं बहुविधव्यसन प्रसंगात् ।
सन्तानतुल्य मवगम्यजनं निवार्य्य,
कल्याण लब्धिकृतये सुमतिं तनोति ॥५॥

तस्यापि योऽधममति र्निजलाभहेतोः
स्वस्वामिनो नयरतेरनुशासनं धिक् ।
उल्लङ्घ्य वाञ्छति सुखं शशशृङ्ग शृङ्गम,
निर्माय कौतुकमहो सविधातुकामः ॥६॥

कूटनीतिदक्षविपक्षशङ्कितमानसेन निजपक्षसमक्षारुक्षवृत्तेन। सुवृत्तेनतेननयभृताभूमिभृतासुरक्षितेऽपि तत्रस्थाने वसता प्रतिमार्गं।विश्वस्ततरा गुप्तचरा नियुक्ताः, ये सतत मालस्यादि दोष निर्मुक्ताः पर प्रवृत्ति विज्ञान समुद्युक्ताश्च समभुवन् । प्रति गुल्म स्थानञ्च शस्त्रास्त्र चालन कुशलाः, अत्याचारि मुख मर्दनः मुसलाः, प्रकृष्ट बलाः कनिष्ठबलाः स्थिरी कृताः ।

प्रति त्रियामं यामिक काय निरीक्षण कर्म विकलाः, मुख्य कानिष्ठबलाः, तदीय कार्य कौशलः परिचय कृते नागरिक लोक रक्षणायच धृतद्विनालिका लासूकार्मुक करवालाः स्थान पालाश्च न्ययोजित, प्रतिस्थानं विशाला मल्लशालाः संस्थाप्य तत्र नाना विधायोधनकलाकोशला श्चपलाः प्रशस्त प्रज्ञा धनुर्वेद विज्ञाः शिक्षिताश्च सन्निधापिताः । किञ्च—

दन्तावला मेघनिभा मदोत्कटाः
कट स्रवद्दान समुन्न भूभयः ।
सयूथपाः सुन्दर विन्दु जालकाः,
सदा सनास्तेन गजाश्व संचिताः ॥ ७ ॥

विनीता जानेयाः प्लुतगति विशेषाः शुभशफाः,
सुहेषाः कम्बोजानिकृतयवयवो वल्गित गतौ ।
तथा पृष्ठया रथ्याः प्रथित गुणयुक्ताभर सहा
स्तुरङ्गाः प्रोत्तुङ्गा ललित ललितास्तेन कलिताः ।८।

तेन च भूभुजाः—

वाचाट पङ्गुगतलोचन काण खोराः,
खल्वाट कोहलमित पचमूक चोराः ।
दोषैकहक्कूपिशुन केयरशीतकारच,
नोलोक रत्तण विधौ।नयती कृता वा ॥९॥

वीराः कुलीनाः शुभकर्म्म लीनाः,
पीनांसवाहा युधि मुत्प्रवाहाः ।
विज्ञेन राज्ञा रिपुलोक कालाः,
सैन्ये नियुक्ताः पुरुषा अबालाः ॥ १० ॥

दिल्लीस्थोपिप्रवल वलभाङ् म्लेच्छराजोऽथ तस्य,
श्रावं श्रावं चरजनमुखात्सैन्यशक्ति प्ररोहम् ।
भूमीजानेः कुटिलधिषणो भीत चित्तः सदैव
शत्रुर्निद्रा सुखमपि जहौनैक चिन्ताकुलात्मा ।११।

निर्धारितश्च तेन तदा चेतसीतिः—

यावत्प्रतापोऽस्ति विराजमानः,
स्वदेश जाति प्रगुणाभिमानः ।

तावत्कथं भारत भूमिकायां
निष्कण्टकं राज्य महो मदीयम् ॥ १२ ॥

एकदा स एकान्ते अन्तरङ्ग भूतान् प्रतिष्ठित कल प्रमाणान् पुरुषान् समाहूय सखेदं तान् प्रति व्याजहार—

संग्रामसिंहोऽस्ति महाबलोऽयम्,
कुलेऽस्मदीये दृढवैरिभावः ।
सिंहो गजेन्द्रानिव भूरि संख्यान
भटान् मदीयानपि हन्तुकामः ॥ १३ ॥

गजमाचलो[१] व गिरिकन्दर मध्यवासी,
विकराल सैन्यसहितो रणभूविलासी ।
कुरुते सदैव मदनिष्टमथो तदीया,
भट मण्डली च पथि पान्थ जनान् दुनोति ॥ १४ ॥

वैदेशिकाः खलु महार्घ पदार्थ जातं,
विक्रेतुमत्र पुरिमे पुरुलाभकामाः ।
आयान्ति तान् वत तदीय जनाः सुदृप्ताः,
केचिद्विलुण्ठ्य पथि किं न भवन्ति तृप्ताः ॥१५॥

सभ्या ननन्य कृत वैरिपदव्याः,
सम्भावितज्यानि निवृत्ति लक्ष्याः ।
किं तस्य शत्रोः खलु शक्तिमन्तः,
विनिग्रहं कर्तुमलं भवन्तः ॥ १६॥

संमन्त्र्य तैः किमपि गुप्तमथो स धीरः,
साम्राज्य विस्तृतिमना यवनाऽधिनाथः ।

१. गजमाचलः सिंहः

स्वाधीन वृत्ति परमार्थकुलावतंसं,
तं जेतुमाशु जघटे बत राजहंसम् ॥१७॥
स्वार्थोपपत्तिनिरतः खलवृत्तिशाली,
शालीनतारहितमानवमानकाली !
कस्कोनु सत्यपथतो विरतिं दधानः
निश्रेयसाय यतते पुरुषोऽभिमानः ॥१८॥

तत्र विचित्रवीर्य इव विचित्रवीर्यः, विजय इव विजयः, दुर्योधन इव दुर्योधनः शतधृतिरिव शतधृतिः शतमन्यु रिवशतमन्युः, उत्तमौजा इव उत्तमौजाः, दुःशासन इव दुःशासनः, चित्ररथ इव चित्ररथः, दिल्लीश्वरस्य सेनायाः सेनानीरिव, सेनानीः श्री मान् मानसिंहः कथं प्रतापेन संगम्य तदनुनयो मया सम्पादनीयो येन स्वजात्यपमान भयं सर्वथापि विनश्येत्, इति निश्चित्य दिल्लीपादशाहनिदेशं विभ्राणः कदाचित्सदैव योगाच्छोलापुर प्रान्तं विजित्य, ततो निवर्तमानः समीरणसम्पर्कजन्यकल्लोललोल-कमले मधुरमधुर कमलेऽतिविमले सागरे वोदय सागरे जलाशये शिविरं संस्थाप्य, महाराज प्रतापसिंहेनाजर्य्यं संगतं कर्त्तुमनाः समानी मानसिंह स्तत्सविधे वचन प्रपञ्च चतुरं सन्देशहरं स्वातिथ्यं प्रतिग्राहयितुं तद्धस्ते पत्रिकां दत्वा प्राहिणोत्। स च सोत्कण्ठं तत्प्रतीहारोपकण्ठ मुपेत्याऽऽजानुलम्बितकोशकरवालं प्रतीहारपालम् प्रणिपातपुरः सरं।।मञ्जुलाक्षररचनं वचनमुवाच श्रीमन् दिल्लीपतेरकब्बर पादशाहस्य दक्षिण भुजायमानः, दिगन्तविस्तारिपराक्रमकीर्तिलतावितानः सेनानायकप्रधानः समानः श्री महाराजं क्षत्रियोचितगुणनिकुरम्ब विभ्राजं साक्षात्कृत्य तत्पुण्यदर्शनेन शोलापुरनरेशपराजयसम्भूतपातकं परिहर्त्तुकाम इव, उदय सागर तटे सेनां संस्थाप्य पत्रिका मेकामुल्लिख्य मद्द्वाराऽत्र-भवन् महाराजो पकण्ठं विसृष्ट वान्। तत्कृपया भवता मदागमनसूचना तत्कर्णो-पान्तसंचारिणी विधेयेति तदीयवचनश्रवणसंजातप्रमोदः स्वस्थोऽपि सद्वाःस्थस्त-त्क्षणमेव तदागमनं पिशुनयितुंततः प्रचचाल । अथ भूमितटमिलल्ललाटपटलो मुकुलिताञ्जलिधारी स प्रतीहारी राजानं प्रणम्य तदागतिसमाचारं यथा श्रुतमेवा वादीत्। अथ श्रुत तदीयसमाचारः सधर्मावतारः प्रसन्नीभूय शीघ्रमेव समानं श्री मानसिंहसंदेशहरं तं मदुपकण्ठं प्रेषयेतितमादिदेश, तदादिष्टः सोऽपि सुधर्मणि देवै दैवेन्द्रमिव महाबलशालिभिः सामन्तजनैः परीतं संसदि विराजमानं प्रतापनिधान

तं शनैः समुपसृत्य ललाटतटचुम्ब्यञ्जलिपुटं प्रणम्य स्वस्वामिकराङ्कितवर्णां पत्रिकां कञ्चुकपेटकतो निःसार्य सविनयं महाराजहस्ते समर्पयांचकार। तत्समाचार जातशुश्रूषया कौतुकोत्तानमुखा मन्त्रिप्रमुखाश्च दत्तावधानाः किमत्र लिखितं मानसिंहेन भवेदितिनीरवीभूय तस्थुः। महाराजोऽपि तदभिप्रायविज्ञः पत्रीं तामुद्घाट्य समीपवर्त्तिनः सचिवान्तरस्य वाचयितुं हस्तेऽदात्। अथसोऽपि सगौरवं तामादाय वाचयितुमारेभे स्वस्ति श्री सूर्य्य कुलावतंस राजहंस महाराज श्रीमत्प्रतापसिंहमहोदयेषु यथोचित शिष्टाचारानन्तरं निवेदनमदः। श्रीमन्तो बहोःकालात्तत्रभवतां महामहिमभृतां भवतां दिदृक्षोत्कलितमानसोऽपि विविधव्यापृतिसंलग्नतावशाद्यावल्लब्धमनोरथो भवितुं नापारयम्। संप्रति शोलापुरविजयानन्तर ततो व्याघुट्य दिल्लीं प्रति परावृत्तिमाकलयन्दैवाद्भवद्दर्शनाकांक्षापूर्त्यवसरं समुपलब्धवानस्मि। सोऽहं सपरिजनोऽद्यभवद्भिर्विधीयमान मातिथ्यं पथ्यं तथ्यमिव स्वीकृत्यात्मानं तोषयितुमिच्छामि। किमतिपल्लवितेन सुरसुः, इति निवेदयति। कञ्चनमानसिंहः, उदय सागर तटस्थः—

महाराजोऽपि पत्रिकाविन्यस्तवृत्तान्तं समाकर्ण्य तत्क्षणमेव विस्मयविस्फारितविलोचनः ससंभ्रमं समुत्थाय परिजनेन सह तंसाक्षात्कर्त्तुं तदुदयसागरतटं प्रति प्रतस्थे। सोऽपि सचिवादिसहितं स्वजातिविशुद्धकुलगुणवृन्दशालित्वमहितं शिष्टाचारसंपालन चित्तवृत्तिं परानुकरणनिराकरणोद्भावितप्रवृत्तिं दूरादेव तमालोक्य सानुचर स्तदभिमुख मेवोत्थाय किंचित्प्रत्युज्जगाम। मिथः प्रणतिविधानपुरःसरं कुशलप्रश्नोत्तरसमाहितमानसौ तौ पूर्वत एव समयज्ञराजपुरुष सज्जीकृतयोः सिंहासनयोरुपविश्य परस्परमामलापसुख मनुभवितुं किमपिवाग्व्यापृति परत्वं प्रकटयां बभूवतुः।

तत्रमेदपाटपुरन्दरोविलसत्कन्धरः स्मितमुखोऽतिथिंप्रति व्याहार्षीत्। अयिमहामहीयमान कुतोऽद्याकस्मादेव मद्भाग्यधेयकरीरेणापिपल्लवितं यद्वीतवलाहकाया दिवोवृष्टिरिवभवद्दर्शनसारसंभूतिरियं प्रीणयतिमे मानससारसम्। त्वद्दर्शनचन्द्रं प्रतिपद्य चकोरायितं मन्नेत्रद्वयेन अहोभवादृशांसूक्ष्मदृशामभ्यागतानां नोन्यूनफलंभवितु मर्हति दर्शनसंप्रति पत्तिः।

अथातिथिरपि तत्सूक्तिरसंनिपीय सन्तुष्टमनाःस्मेराननस्तं प्रत्युवाच। अयेसूर्य्यकुलमणे वयमेवाऽद्य निजानुकूलभाग्यधेयवशंवदतया चिरकालाकाङ्क्षितंभवदीयदर्शनमासाद्य कृतकृत्याः स्मोजाताः। इत्येवं विधं श्रावणसुखदं तयोः संलापजातंश्रुत्वोभयपक्षस्थाः पुरुषाः सधन्यवादं साभिवादं चतद्विनम्रतादिगुणप्रकर्षं सहर्षं प्रश-

शंसुः। ततः प्राघुणिकमहोदयस्य सपरिजनस्य तस्यकृते स्थानादिप्रबन्धं विधाय तदीय वाहन वाहानां घासवुसदर्दरादिव्यवस्था माकलय्य—

आतिथ्यनिष्णानपुरुषान् नियुक्तान्
प्रमादगन्धेन सदावियुक्तान ॥
तत्सत्कृतेऽसोऽकृतभूमिजानिः।
सतां हिनाभ्यागतमानहानिः ॥ २१ ॥

सविशेषात्स्वामिनिदेशादतिथिसत्कारकार्य्यचतुराः सम्यगालापकलापसम्पादनविदुरा यथोचितव्यवहारकारिणस्ते राजकर्म चारिणः श्रीमानसिंहस्य तदनुचरवर्गस्य च यथोचित सुख साधनानि समुपस्थापयांबभूवुः स्नानात्पूर्वं स्नानीयं तैलं पल्यूलनं च संनिधाय यत्र तत्र समुचितस्थानेषु मनोज्ञानिकाष्ठपटलानि संस्तीर्णकुशासनानि संस्थापितानि, क्वचित् त्रिपादिकाः कुत्र चिच् चतुष्पादिकाः क्वापि पीठकानि संयोजितानि। क्वचिदासन्दिकाः सुखोपविशन्यश्च संकलिता.। साधारणजनकृतेऽपि विचित्र चित्रितं भूतलास्तरणं च संस्तीर्णम्। विश्रामस्थानेषुच सूत्रपट्टिकाग्रथिताः सुग्रथिता मञ्चाश्च संस्थापिताः। तत्रचद्विभङ्गी चतुर्भङ्गीसपर्यङ्कयः सोत्तरच्छदाः सोपधानाः सज्जीकृताः। प्रतिस्थानं विनिहितसुरभिशीतलनीरकुम्भाश्च त्रिपादिका साधुसंकालिताः केचन महाराज सेवकाउदयदुदन्यान् काश्चनातिथि लोकान् शर्करोदकंद पाययन्तिस्म केचिदपरे ताम्बूलचर्वणरसानन्यान्कांश्चिद् राजन्यान् प्रति ताम्बूलवीटिकाः संयोज संयोज ददुः। केचिच्चश्रान्तान् अभ्यागतान काश्चन संवाहयामासुः। अन्येचकेचित् काँश्चन स्नापयन्तिस्म केचित्तेषां धौतवस्त्राणि प्रक्षालं प्रक्षालं निष्पीड्य शोषियतुं विस्तारयामासुः।

पाककर्म्मणि कुशलाः पाचकाश्च गोमयगोमुखाः समीरसंचारसुखाः परिता विराजमानभोजनसाधनजालाः पाकशालाः समेत्य पाकोपक्रमक्रम माब बन्धुः। पानीयहारिणः पानीयं पानीयं समाहारं समाहारं वृहत्पानीयपात्रेषु संभरन्तिस्म, केचनधीवराः परामत्रपिठरकुण्डिकास्थालपात्रीकटोरककटोरिकाकंस पात्रकटाहकटाहीदर्वीसंदंशिका पिष्टपचन प्रभृतीनिभाजनानि संमार्जंसंमार्जं यथास्थानं स्थापयां बभूवुः।

लवित्रपाणिः किलकोऽपिशाकं
चकर्त्त सम्यक् प्रमदप्रकाशम्।

पिपेष पिष्टिं निपुण तथाऽन्यः
कश्चित्ततश्छानयतिस्म धन्यः ॥२०॥

चूर्णं च गौधूममथो विमर्द्य
कश्चिज्जनोऽनल्पबलोतिसद्यः ।

स्थालेविशाले सयथा विधान
मास्थाप्य तल्लोत्रिगणं ततान ॥२१॥

केचिज्जनाश्चिक्कणपश्वशाखाः समानमानानिसुगोलकानि ।
निर्माय २ निधायपत्रे ददुर्द्रुतं बेल्लकमानवेभ्यः ॥ २२ ॥
तेचाऽपि संगृह्य ततोऽतिहर्षं स्मेराननाश्चक्रकबेल्लनाभ्याम् ।
संवेल्लयन्तः सुमनोज्ञपोलीः प्रकाशयन्तेस्म सुपाटवंस्वम् ॥ २३ ॥
कटाहिकायां परिमार्जितायां निपात्य हिङ्ग्वादयुतं च सर्पिः ।
आरा लिकः कश्चन दर्विपाणिः शाकानि संभावयतिस्मतत्र ॥२४॥
शुष्काणि शुष्काणि समिन्धनानि दृढानि संयोज्य स्वचुल्लिकायाम् ।
सन्दंशहस्तः पुरुषश्चकश्चिद् वैश्वानरं धुत्त्वयतिस्म तत्र ॥२५॥
पूनीकरः कान्दविकश्च कश्चिदाज्याचितायां सुकटाहिकायाम् ।
यथाक्रमं पोलिगणं निपात्य तत्पाकमापादयितुं प्रवृत्तः ॥२६॥
संयावकं कश्चन पायसंच पक्वां सुलप्सीं सरसां तथैव ।
प्रपानकं सौरभ संकुलंवा संपादयामास परां रसालाम् ॥२७॥
नालायमाना अधिपाकतन्त्रं रसान्तरायोजनसिद्धहस्ताः ।
प्रशस्तपाकप्रविधानहेतोः प्रशंसिमापूरसवित्पुरस्तात् ॥२८॥
भोज्यानि चूष्याणि पेयानियानि लेह्यानिवस्तूनिसंपादितानि ।
विज्ञैस्तदातत्र सर्वाणितानि, लोकोत्तराणीव सम्भावितानि॥२९॥
सिद्धेथपाके सकले यथास्वं यथाक्रमंभोजन सद्मभूमौ ।
निदेशतोमान महीभृतोभटाः सपङ्क्तिबन्धं प्रययुः शनैःशनैः॥३०

**प्रक्षाल्य हस्ताङ्घ्रिमुखं पुरस्तात् सैन्या यथाजाति कुशासनेषु।**
**कृतोपविष्टीन् मुदितान्तरङ्गान् प्राभोजयंस्ते परिवेषकार्ये ॥३१॥**

केचन पत्रालीः परिवेष्य तत्र यथावकाशं शष्कुलीः पोलीः स्थिरयन्तिस्म, तत्सविध एव नानाविधानिशाकानि पत्रपुटेषुशरावेषुच निधाय पानपात्रेषु सुरभि शीतलं च बारि, रामठसम्भावितां जीरकधर्मपत्तनादिकवेशवार सम्मिश्रां राज्यक्तां चापरत्र कंसपात्रेषु प्रपूर्य्य कटोरिकासु लप्सिकां परिवेषयामासुः। केचन सुकुमाराः कुमाराः पानीयपूर्णानि सागरभाजनान्यादायमादयं सानन्दसाग्रहपूर्वकं तत्परिवेषणं चक्रुः।

केचन संयावः संयावः गृह्यतां गृह्यतां पायसं पायसं स्वीक्रियताम् २ केचन-रसाला २ उपादीयताम् २ अथापरे सन्धितं सन्धितम्, आस्वाद्यताम् २ शाकः शाकः शुण्ठिका शुण्ठिका इन्दुरसा, इन्दुरसा, गृह्यताम् २ इति तारस्वरं प्रगदन्तो यथा रुचि तद्भोज्यवस्तूनि प्राघुणिकाँस्तान् प्रभोजयन्त इतस्ततो भ्रमन्तिस्म केचन रस गुलिका अपरे मुक्तामोदकान् तथाऽन्ये सामृतीः पीडिका दुग्धपूपिकाश्च तदग्रतोभू योभूयः साग्रहं परिवेषयामासुः। तथेतरेघृतपूरखण्डपालचक्रिकामिष्टमण्ठान् परि-वेषं परिवेषं तानतिथीन् साधु सौहित्यं नयन्तिस्म। ततःपरं दधिपक्वपटिकाः पर्पटान् मकुष्ठकदालिं कलमवटक पिष्टवर्त्तिकाश्च परिवेषयन्तः पुनः पुनस्तद्गुणवर्णनपूर्वकं तदुपभुक्तये समुत्साहयामासुस्तान् कृताशनानपि।

भोजनान्ते च गण्डूषादि विध्यनन्तरं तेषांकृते ताम्बूलवीटिकाः संयोज्यप्रददुः।

**सैन्याः समस्ता अथभोजनानि नाना प्रकाराणि सुनिर्मितानि।**
**भुक्त्वा मिथस्तानि रसायनानि प्राशंसयन् विज्ञवराःसहर्षम् ॥३२॥**

ततः प्रायः सर्वेष्वपि सैनिकेषु कृतभोजनेषुसत्सु मेदपाटपतिना प्रेषितोऽमर सिंहोनामसुकुमारः कुमारः मानसिंहोपकण्ठमुपेत्य सप्रश्रयमुवाच। भवदाज्ञानुरूपं सर्वेऽपिभवद्भु जिष्या भोजनं कृतवन्तः श्रीमद्भिरपिभवद्भि र्भोजनावासगमनकष्टं स्वीकृत्य तत्र यथा सामर्थ्यं रूक्षशुष्कप्रायं यदशनंभवत्कृते सज्जितं तेनैवक्षुन्निवृत्ति सम्पाद्यानुकम्पनीयावयमितिनिवेदनं नः। श्रीमान् मानीमानसिंहः कुमारस्यतस्य वाङ्माधुरीपीयूषं कर्णशुक्तिकया निपीय सन्तुष्टान्तरात्मा तं करपल्लवेन पृष्ठे स्पृशन् मध्येमार्गं किमप्यालपसुखमनुभवन् भोजनभवनं तेनैवसह समाससाद। तत्र च पूर्वत एव कल्पिते समुचितासने समुपविष्टः पाकालयाध्यक्षेण सुवर्णमयेषु

राजतेषु च पात्रेषु षड्रसम्पन्नं षट्त्रिंशद्विधं साधुरीत्या संपादितं परिणामहितं तद्भोजनं यथाविधि संयोज्य सादरं तदभिमुखतः संस्थापितं, अथ दिल्लीश्वरसेनानी प्रधानः स मानः कुमारमाह प्रेष्ठ समागतेऽपि भोजने त्वत्पिता सन्धिसुखमनुभवितुं कथंनाद्यापि समायात् क्वचिरायितं श्रीमता मेदपाटभूमिभृता भवत्तातेन तेन ।

तदतिशीघ्रमेव स समाह्वातव्योयत्प्रथममेवाऽयमवसरो दैवाल्लब्धोयुष्माक मतिथिभावमुपागतोस्मि ।

अथ जनक प्रबोधितः सपत्नाहितः सोऽपि तं प्रत्यगादीत् श्रीमन्शिरोवेदनाद्य तातचरणान् वाधते तत्ते नाद्य किनपिभोक्तुकामा अतोभवद्भिरेव तावदशनमशनीय मिति ।

चतुरो मानसिंह स्तदनागमकारणं ततो भिन्नमेवेति सम्भावयन् नितरांचिखेद आह च जनक निदेशधारं कुमारम् अयि युवराज मद्वचनाद्वक्तव्यः, त्वया स्वजनकः यदहं शिरोवेदनावेदनधारी सम्यगस्मि तत्प्रतिकारकारी, प्रेम्णा गृहमागतस्य मद्विधस्यातिथे र्निकारो न परिणामरम्यफलकारो भविष्यति । अहंतुशोचनीयदशाभाजने तस्मिन् सम्बन्धिनिजनेदयमानएव तद्दशां पर्य्यवस्थापयितुकामः स्वयमेवागमम् । कामे शक्तिः क्षणमात्रेणाऽपि किमहं कर्त्तुं पटयानिति कोनावगच्छति विवेकवान् पुरुषः यत्कारणात्समयि घृणांधत्ते तस्यैव दिल्लीवल्लभस्य यदि शीघ्रमेव कृपाकांक्षी न भवति तर्हिमिमाऽपि धिङ्मानसिंहभिधाम् । इति स मानसिंहः सिंहवादं निगद्याऽन्न देवतानिरादरभियातन्निवेदितभक्तस्य कतिचित्कणानुष्णीषेनिवध्य समन्युस्तत उदतिष्ठत् ।

महाराज प्रतापसिंहोऽपितारस्वरांतस्यगर्वोक्तिं निशम्य सहसैवतत्रागत्य स्मयमान इवमानं जगाद । श्रीमन् मास्म मन्युं गमः, अस्थानेभवतोऽयंकोपः" यो महापुरुषो यवनराजसम्बन्ध सौभाग्यशाली नवपरिष्कृतिदक्षः पुरातनवैदिकसिद्धान्तविपक्षस्तेनसहमादृक्षः कथंकारं सान्धिसुखानुभवभाजनं भवितुमर्हः संविहिततद्गर्हः ।

**येषांकुलेऽहमुत्पन्न स्तेषांरीतिरियंमता ।**
**श्रूयतांभवताऽद्य विस्पष्टं प्रोच्यतेमया ॥ ३३ ॥**

स्वकुल जातिधर्मविरुद्धं कार्यं कुर्वद्भिर्बलवद्भिरपि सजातीयैः सहभोजनादिव्यवहारः सर्वथाऽपि परिहर्तव्यइति । अथितिरूपेणभवानत्रसमागात् तद्यथाशक्ति शिष्टाचारानुरोधाद्भवत्परिचर्य्यासमुद्योगोऽस्माभि र्व्यधायि । शत्रुसकाशाद् जजनिष्यमाणायात्रापत्तिपरम्पराया नजातुविभ्यति संग्रामसिंहवंशाः पूर्वमपि कतिचिद् वारान्

म्लेच्छसम्बन्धदोषनिवृत्तये स्मृतिदुःखप्रदानपिक्लेशविशेषान् :सोढाऽपि विमलंकुलं कलङ्कपङ्कतोररक्षुर्यस्य पूर्वजाः सोऽहं कथंमवत्तोषायतदीयंकुलं मलिनयेयम् । कारणगुणाः कार्य्ये गुणानारभन्त इति सिद्धान्तो नास्मत्कुलेसाम्प्रतमपि व्यभिचरति । धन्योभवान् यः पितृष्वसुः सुखोत्सवं मनसावचसा कर्म्मणा च सेवमानः क्षत्रियजातिं स्वस्थयति । धर्मभीरवो वयं स्वकुलमर्य्यादापालनाग्रहग्राहः समाविष्टचित्ता भवादृशां-विबुधविशामनुकरणेऽपि न प्रभवामः । अस्तु किमतिवदावदतया शीघ्रातिशीघ्रं पितृस्वसृपानुमत्या यदभिरोचतेभवतेतदेवानुष्ठातुमर्हतिभवान् ।

यस्मिन् कुलेत्वमुत्पन्नस्तत्त्वयाधीर संसृतौ ।
ख्यापितं म्लेच्छनाथेन संगत्याद्य विशेषतः ॥३४॥
बाहुजजातिरत्नोसि मानमाननिधस्तथा ।
येन वीरेण देशोऽयं त्वयास्वस्थो विधीयते ॥३५॥
दिष्ट्या भारतं वर्षंत्वामुत्पपाद्य यशस्विनम् ।
आकल्पवर्त्तनीयानां श्रेयसामस्तिभाजनम् ॥३६॥
आहिमालाधरः शम्भुश्चक्रपाणिश्चसोऽच्युतः ।
त्वादृशां भूपरत्नानां करोतुभुविवर्द्धनम् ॥३७॥
मन्येऽहं शूरवीरस्त्वं विधसेमानभूपते ।
समेधितं च तेऽत्यर्थं साम्राज्यं म्लेच्छभूभुजः ॥३८॥
किं बप्पारावलस्याऽपिभूत्वावंशे समुज्ज्वले ।
म्लेच्छसम्बन्धयुक्तेन विदध्यां सहभोजनम् ॥३९॥
यावत्प्राणाः शरीरेमेवर्त्तन्ते मानबाहयोः ।
सामर्थ्यं करवालो वा करालो ध्रियतेकरे ॥४०॥
तावत्तु कुलमर्य्यादां पालयन् यवनाश्रितैः ।
सजातीयैरपि सम्बन्धं कर्त्तुंनालं यथोचितम् ॥४१॥

इत्येवंतेन प्रत्युक्तोमानी मानसिंहो विप्रकृतो नागइव दीर्घं निश्वस्य ज्योषमेव ततः प्रस्थानमकरोत् । तस्मिंश्च गतवति महाराजः प्रतापसिंह स्तद्विरहितंस्थानं तद्वासदूषितं संजातमिति यथोचितं शोधयामास ।

तदानीं तत्रयत्सविवमण्डलं सामन्त चक्रवालं चोपस्थिमभूत् तद् द्वयमपि लोकोत्तरं तदीविचारं विरोधि समक्षमेव तदनुचितकृत्यनिम्दाप्रसारं च परस्वरं प्रशशंस ।

यस्यान्वये सभागवान् करुणैकमूर्तिः
सीतापतिः सकल दैत्यकुलप्रमाथी ।
लेभेजनिं जनितभूसुरभूरिमोदः
श्रीरामचन्द्र वसुधाधिपतिर्विंतोदः ॥४२॥

तस्याऽस्यभूपतिमणे रणपण्डितस्य
मानाग्र तोऽपियदिशौर्य्यकथा प्रसंगः ।
नैवास्तिचित्रमितिसातिशयेऽपिशत्रौ
निर्भीकतैव ननुमानभृतां स्वभावः ॥४३॥

दुर्दान्तशत्रु गजराजमृगाधिपानां
स्वातन्त्र्यरत्नधृतिभाग्य जुषांभटानाम्
विघ्नैः सहस्रगुणितैरपिजालुनैव
कार्पण्यभाजन महो हृदयं व्यचायि ॥४४॥

भोगालयो वपुरिदं परमेश्वरेण
प्रादायि पूर्वजननान्तर कर्मयोगात् ।
तत्तत्फलावधिभवेत् स्थिर मत्रनूनं
कस्तत्कृते कृतिवरः प्रभवेत्प्रदूनः ॥४५॥

हताशो दुर्बुद्धिर्यवनकवलाजीवन परः
परोऽसौ भूपाग्रे क्षणमपि सगर्वंनिगदितुम् ।
समर्थो माभूद्यज्झटिति चलितोमुद्रितमुखः
कलंकीनो दीनप्रमथनरसो लज्जित इव ॥ ४६ ॥

पितृव्यो हा हन्त प्रथममिह यस्याधममतिः
महाभीरुःस्वीया यवन नृपभार्य्यामतनुत ।

स्वसारं निर्लज्जो विमत नृपवंश्योऽपिहतकः
समानोऽप्यस्माकं नृपतिमपिवष्टि स्वकयितुम् ॥४६॥
बलीयांश्चाप्येषोऽकबरयवनाधीनगतिकः
स्वदेशीयान् भूपानपि बहुमदो हन्त तरसा
रणे जेयं जेयं द्रढयतितरां म्लेच्छविभवम् ।
कथं मानो मानं तदपि लभतामार्यपुरतः ॥ ५० ॥
अयं देशद्रोही नृपकुलयशोवल्लिपरशुः
न सभ्यैः संभाष्यो निगमसमयात्याहितसहः ।
महामायोऽकस्मात्प्रणयरसमुक्तोनुनिपुणं
प्रतापं शुद्धाभं मलिनयितु मागादिह कथम् ॥ ५२ ॥
मुधैवास्याभिख्या यवनविभवापादनरतेः
कुलीनोऽप्याहोयः सुकृतभिदि लीनः प्रतिदिनम् ।
दुराशो दुर्वृत्तो विगतकुलमानो * जय इव
स्वदेशस्वातन्त्र्यं परविषयिवश्ये कलयति ॥ ५१ ॥

अहो कले र्महिमा येषां पूर्व पुरुषाः प्रात रुत्थायय्यद्दर्शनमपि पातकजनकंमत्वा दूरा देव परिहरन्तिस्म यद्दृष्ट भोजनं च दूषितं मवधार्य्य सारमेय कुलाय प्रायच्छन् यदङ्गस्पृष्टं वासोऽपि शुद्धवारा प्रक्षाल्यैव परिदधिरे यदुच्छिष्टंधातुभाजनमपि समुज्वलित वीतिहोत्रें निपात्य शोधितमपि न व्यवहरणीयमिति व्यवस्थापयामासुः। यत्कृते च स्ववासभूमेःपृथगेव वासं निर्णीतवन्तस्तेषामेव संप्रति मानसिंहमुखाः मातृमुखाः सन्तानरूपा भूपा नानाप्रकारैः संभ्रमवारैः सत्कुर्वन्तः किंनात्मानं कृत कृत्यमिव मन्यन्ते । हन्ततैः स्वकुलमार्य्यादायै तिलाञ्जलिंप्रदाय प्रभुचेतोरञ्जनाय के केन न क्रियन्ते ससंभारा अत्याचाराः । इत्येवं मानसिंह निन्दांमहाराजस्य प्रशंसांच विदधतः सामन्तादयः सन्तस्ततो निजं २ स्थानं प्रति पेदिरे ।

इति चतुर्थोनिश्वासः

* जय चन्द्र इव

# * अथ पञ्चमोनिश्वासः १ *

मङ्गलमयमपि कण्ठेकालं, दोषाकरकरराजितभालम् ।
आशुतोषमानतनतिपालं, वन्दे भवितुं भव्याधाऽलम् ॥१॥
कृतजयं जयचन्द्रसमोद्यमं, समितिवैरिविभातयमप्रभम् ।
अकबरोऽथ समान मपारतं, सदकरोत्कुशलेन समागतम् ॥२॥
विजयशाल्यपिनोमुदितानन:, प्रथितपाप इवच्युतराघनः ।
कथमयं ममवानविरक्षणः, समजनिष्ट विलक्षण वीक्षणः ॥३॥
समवलोक्य महाभटमागतं, मनसिमानममानसमाकुलम् ।
इति वितर्कवितर्त्तवशोऽयशी, प्रतिजगादतमेत्य महायशी ॥४॥
कथयवीर कथं भवतोवपुः, कृशमिव प्रतिभाति हतच्छवि ।
किमितिशारदचन्द्र मिदं मुखं, जितचरं ननु नानुकरोतिते ॥५॥
अजनि काऽपिरुजा किमु विग्रहे, जनपदान्तरवा: परिवर्त्तनात् ।
नहि शरीरज रोगनिमित्तजा, भवतिजातु दशाभवतो यथा ॥६॥
यदपि कारणमंग विषादिता, समवलम्ब्य तवाजनि तद्वदेः ।
प्रतिकृतिश्च रुजोऽपिकथंभवेद्, बुध तदीयनिमित्तविदां विना ॥७॥
वयमये भवदागमकौतुकं, वितनुमोऽद्य सपत्नजयश्रुतेः ।
त्वमिह हन्त परं प्रतिभासि मे, बहुविषाद परीत मनाइव ॥८॥
वदविशङ्कमयेभटपुंगव, तदति शीघ्रतया प्रति मामपि ।
निजविषाद निमित्तमरंयतः, प्रतिविधानविधिं प्रतियत्यताम् ॥९॥
आश्वासनोक्तिं निज नायकस्य, निशम्य मानो मुमुदेऽथतस्य ।
श्रीमेदपाटेश्वर सद्मजातं, संक्षिप्य सोऽख्यात्स्वकमानपातम् ।१०।

तद्यथा-श्रीमन् दीनबन्धो करुणासिन्धो दिव्यस्वभावाद्भवत्प्रसादाद् महा विपक्षं शोलापुराध्यक्षं सर्वसमक्षं पराजय निमीलिताक्षं विधाय यथावसरं च ततः

प्रस्थाय दुर्दैवप्रचोदितःस्वजातिस्नेहप्रणोदितः पुरोभागिताघने दुर्भाग्यभाजने महादुरभिमानभृति मेदपाटभूमिभृति अनात्मज्ञेप्रतापसिंहसंज्ञे दयमानस्तन्मङ्गल सम्पत्तिदत्तावधानः प्रणतवत्सलस्य तंसद्गुणमकरन्द भसलस्य तत्रभवतोभवतो दयापात्र' कारयितुं वावश्यमानः सुविश्रान्तयानवाहनः मध्येमार्गमापतितं तत्पितृनिर्मितं जलशयं नमयास्थितिं कृत्वातदाध्यंस्वीकृतवान् सुकृत वानहम्, पूर्वं तेन नतेनसाग्रहं सानुचररतत्रवासितः सत्कृश्च परंभोजनसमयेऽतीवमयिदुर्व्यवहृतं सत्सभ्यताकर्मणः सर्वथाऽपि परिहृतम । तत्तादीयं कृत्यं नितरामेव दुनोति मे मान समहर्निशम् । अहो समस्तसामन्तमुकुटमणिमरीचिसन्दोहरञ्जितपादकमलः कमलनाभइवलोकोत्तरविक्रमः, विक्रम इवाद्भुत कार्यजन्ययशोराशिः, राशीभूतचारुचाराच्च साक्षात्कृताशेषारातिमण्डलः, मण्डलाग्रधाराक्षालितवैरिपालिमदगन्धः महाप्रशस्त प्रशंसित व्यवस्थितराज्यप्रबन्धः, खमणिरिव सुतीक्ष्ण तेजा विडौजा इव परोन्नति विध्वंसक्षमौजाः स्वइवाहितहितनिकृन्तनचातुरीचतुर्मुखः प्रजारञ्जन कर्मकर्मठतानुभूतमहासुखः, यस्य जनस्य दिव्यदृशोभवादृशोऽपि भवेद्भर्त्ता समाश्रितलोक शोकसहर्ता सोऽपिप्रभुचरणानुरागसौभाग्यभाग्जनः तथाविधदुर्मुखप्रयुक्ता युक्तोपालम्भकदम्बानुतापसंतप्तहृदयःस्यात् । अथ श्रुततदपमानसमाचारः कूटनयावतारःमेदपाटभूपालानिष्टाभिनिविष्टमतिः, यवनलोकपतिः, अवितथां तां मानसिंहन्यक्कार कथांभूयो भूयस्तन्मुखादेव निशम्य प्रकटितमहाविषादइवान्तः स्थितपरमप्रसादः, सगम्भीरं चिरं निश्वस्य मधुमधुरैर्मनोलोभनीयरचनैर्वचनैः, तं सान्त्वयन्निजगाद । वत्स सास्मबहुधैर्यगुणभेदं खेदंगाः । ❀

महोद्दण्डः सदास्मद्विषयं प्रादुष्कृतचुविरोण्डः, कतिकतिवारान् मदाश्रित जनसंहारान् कृत्वा निष्कारणमेव किंमामपि मा परिभूत् । परंशान्ति प्रियेणमया तस्य शतशोऽपि मनोवाधा अपराधा परिणामहिताः सहिताः,कलह प्रधानः किंसुखावसानः, सदुर्निरोधो मिथोविरोधः,इतिकृतापराधेऽपि तत्रसदैवौदासीन्यं प्रायोवालम्बि,तथाऽपिन चेतयते सदम्भी । मत्सम्बन्धेनैवाऽऽयुष्मति दुष्चरितमाचरितंमहाहठेन शठेन तेनेति नायुक्तव्यूहो १ मदूहो विद्यते तन्ममापि चेतोऽति खिद्यते सनावगच्छति गड्डलिका प्रवाह निपातः सदुन्नति व्यतीपातः, सुकृत सत्त्वंम्, तत्त्वं सभ्यतानिर्मुक्तेऽपि पिदुक्तेनैव स्वकायसादं विषादं भजेथाः । रामायणमहाभारतादिग्रन्थाध्येतारो धर्म नेतारो

❀ व्यूहो निर्माणतर्कयोरिति हेमचन्द्रः ।

हिदेशदेशान्तरस्थैः सुव्यवस्थैःपुराऽपि विवाहादिसम्बन्धः परस्परंकृतो नवेति निश्चे- तुमर्हन्ति सन्तोऽर्हन्तः ।

इदानींतनामूर्खजनाः किमपि प्रलपन्तु मुधैवाऽत्रवैमत्य मुद्भाव्य खिन्ना भवन्तु विद्विषन्तुवा, मया तु पुरातनी पद्धतिर्लोकहित कामनयैव समवलम्बिता कलहकारण निवारणं परस्परसंबन्धकरणेनैव भवितुमर्हतीति मे निर्धारणम् । यदि समूढो दुरा- ग्रहःक्रमेलकारुढो विततयाहतभाग्यतया ।निर्मायिनो मदनुयानोऽपि तिरस्कर्त्तु- मनाध्रियते तर्हिशीघ्रमेव विक्रमवता भवताऽपि तध्दृष्टतापरिहारः कुतो न क्रियते यथा रुचितन्मानामर्दनं विधाय स्वापमानजन्य सन्तापंशमयितुं प्रभवति भवान् । काऽत्र- शौर्य्यवतो भवतो प्येतावती चिन्ता कियतीरणसामग्री दारिद्र्यपिशाचजगधस्य दुर्विदग्धस्यतस्यस सविधे । बाहुबलेन सागरंतितीर्षुः, चुलकेनवातं पिपासुरिव संग्राम कलानिर्विकलेन भवताऽधिबलेन सिंसंग्रामायिषुः स कथंन हास्यतां प्रयास्यति विचार- वतां विक्रमवतांपुरतः तद्वीर जहीहि चिन्तां कर्त्तव्यं प्रति सावधानं भव अचिरा- देव प्रकटित द्रोहं समाश्रितमाहं स्वभावरङ्कं महा निशङ्कं प्रतापामिधं स्वमन्यु वह्नि समिधं विधाय स्वात्मानं संतोष्य क्रीड़ाशकुन्तमिव तंवशीकृत्य नतेनतेन यथेच्छं स्वच्छं ममापि मनोविनोदयिष्यसि । ये चाततायिनस्तस्यानुयायिनः क्षितिपालबालाः सन्तितान पिकुमतीन् स्वकर्मि विरतीन् तथैव विनेष्यसे ।

**इत्येव माद्यं यवनाधिनाथः, प्रोवाचतं संस्तुन पूर्वगाथः ।**
**स्वार्थो पपत्तिं प्रतिजागरूकः, कस्तद्विधो वा समयेऽपि मूकः ।११।**

इति कौटिल्यपूर्ण रचनंवचनीयं तस्यवचनं श्रुत्वातदभि प्रायंचहृदिधृत्वा स सामन्ताः केचन सभ्यजातीयाः सचिवादयोमहान्तः सन्तः परस्परंप्रोक्तवन्तः, दिल्ली- पतेरस्य सविशेषकृपा भाजनस्य मानसिंहस्यापमानकर्त्तामेदपाटभूभर्त्ता नूनमद्य निरवद्योऽपि वध्यः संवृत्तः । इदानीं पूर्वतएव तस्यमहा विद्वेषीछिद्रान्वेषी प्रवलबलवाहः सोऽयंपातसाहः, समुचितप्रसरं* समुपलब्धवानवसरम् प्रमदविका- साय तन्नाशाय । मानापमानंविदधानेन प्रशस्तकुलाभिमानेन मेदपाटभूमि पतिना पराक्रममतिना नैवदूरदर्शिता, प्रदर्शिता अखर्वेण यस्यबलगर्वेण विजितारिमण्डलः आखण्डल इवयवनेश्वरोऽयं स्वस्थतांबिभर्ति स्वविलासितां च प्रत्यहं निष्प्रत्यूहं पिपर्त्ति तस्यास्य मानसिंहस्य सन्तोषकृतेऽपि असाध्यमपि कृत्यंस्वकृतिसाध्यं कर्त्तुं प्रयतेत ।

* प्रसरस्तु संगरे प्रणये जवे इति हेमचन्द्रः ॥

यथाऽनेन कूटनय धनेनशूरता कर्मशालीना महाकुलीना अपि अनेकेसुधन्या-राजन्या वशीकृता स्तथैव किमयं विद्वेषिवृन्दपुरस्तात् सदासमुन्नतभालः सुकृत व्यवस्थै कपालः सभ्यजातिरत्नरूपो मेदपाट महीपोऽपि निघ्नीकरिष्यते तथासति यतोधर्मस्ततोजय इति आप्तजनोक्ति मिथ्यार्थाभिव्यक्तिरेव सेत्स्यति । सकंसारातिः पुरारातिर्वा प्रतनोतुतस्य दृढव्रतस्य क्षत्रियप्रवरस्याऽविकलं कुशलम् । तत्र कश्चिद् महाविपश्चिद् धर्म दृष्टिःकलितपक्षापात विसृष्टिर्बहु कष्टपूर्वकं जगाद अहो प्रभुत्व युक्तस्य मदोनकस्येति कस्यचिदुक्तिं यथार्थं प्रयुक्तिं कुर्वन्नयं यवनभूपः स्वार्थोपत्तिपरः कस्य विचारवतः सतो दृष्टौनयपरो वर्त्तते स्वतन्त्रविचारस्य धर्मावतारस्य महाप्रतापस्य तस्य प्रतापस्य निकेतनेऽनाहूतएव कुतोगत आत्मना सहभोक्तुं वा तत्राग्रहः कथं कृत इति । रामायण महाभारत दृष्टान्तद्वारा चाऽत्रगतसंबन्धमपि सुसंगतं-चिकीर्षुर्दुरभि सन्धि स्वं सवुं वूषुं रयमनुयोक्तव्यो यदातनी भवतापरम्परसम्बन्ध-चर्चा क्रियते किं तदानीमपि भवद्देशेम्लेच्छा अभूवन्निति । तदातुप्रायः सर्वत्रैव यथोचित धर्मानुष्ठान विधायिनो वेदानुयायिनो जनाएव बभूवुस्ततेषां मिथः सम्बंधे-नासीत्काचिदपिक्षतिः । श्रीप्रतापसिंहस्याऽत्र मुधैवाविमृश्यकारिता विगीता । तंप्रति सन्धिसहयोग नियंगदुराग्रहकारी निजप्रमुखकर्मचारी मानसिंहः सर्वथापि समुचित व्यवहारीति किं स्थाने कथनम् । येऽत्र तत्र पक्षपातैक दृष्टयः संकलिताचारसृष्टयः दुर्विचार धनाः केचनयवना, उपस्थिता आसन् नितरामेवतैः प्रसेदे संभूयचमिथः संलाप कौतुकं परिदधे । दिष्ट्याऽद्य भगवतऽल्ला तालानामवता मानसिंह प्रतापसिंह । मिथयोरेतयोरगजगजयोरिव विशाल विग्रहयो-र्द्वनिग्रहयोर्हिन्दुराजपुत्रयोर्नाशप्रसङ्गः समुपस्थापितः, तदेनयोः शस्त्रसंपात-वेलायां भविष्यति नयनोत्सवो नोऽपि । कैश्चिद यवनरपि सहृदय हृदयैः पातसाहमहोदस्य मानसिंह संमान हृदयस्य तथा विधोनिश्चयोन साधु प्रतीतः, परं तद्भियामध्ये सभंतेऽपि तत्र विषये कि मपितं प्रतिवक्तुं नापारयन् । अतो यथेच्छमेव श्रीमेदपाटेश्वरनिग्रहाय विग्रहोपकरणसंग्रहाय सज्जतां कारयामास स भूपालाभासः ।

**श्री पुण्यभूमे तवशोचनीया,**
**जाता दशा हा ? किमुमोचनीया ॥**
**अन्यैंरिहत्या अपिशत्रुवश्या,**
**मापाद येस्त्वा समुदार वंश्याः ॥१२॥**

येमानिनःकेचन धर्मवन्तः,
सन्त्यत्र ते मङ्गलकामवन्तः ।
तेषामपि प्राणित साहसक्या,
त्यागे सज्जाःपुरुषाः विलज्जाः ॥१३॥

इत्येकेचिद् विमलधिषणाः, सानुतापाश्रपापा,
मन्दं मन्दं प्रभुजनभयाद्भाग्यहीना वदन्दः ।
तस्मात्स्थाना दथ विदधिरे प्रस्थितिं निश्वसन्तो,
धिक् धिक्वाहङ् नरपवशतां यत्रवावोऽपिरोधः॥१४॥

समानसिंहो यवनेश्वरोवा, कुत्राऽस्मिंल्लोके विषयाभिलाषी ।
स्वलाभहेतोः किल सज्जनानां व्यधायियाभ्यां वहुशःप्रहाणिः॥१५॥
सप्रतापसिंहःसुकृति प्रतिष्ठः, सतां प्रियः शुभ्रयशोगरिष्ठः ।
नोजातु शत्रुव्रजतोबिभाय, स्मृतोऽपि नःसोऽत्रमहामहाय ॥१६॥

तत्रमेदपाट भूमीश्वरोऽपि महस्त्रैरिणि ससन्यौ मानसिंहे प्रयाते सति भावि संग्रामग्रामसंभावनया सैन्यसञ्चालनकर्मणिदत्तान् स्वजातिधर्मदेशगौरवरत्तान धनुर्वेदरहस्यविज्ञान् पण्डितान् नानाविधगुणगरिममण्डितान् कुलक्रमागतान् लोभादिदोषविरतान् भक्तान् महाशक्तांश्च रणधीरान् वीरान् सेनानां नायकत्वे नियुज्य सामन्तलोकशक्तिसमर्जनपुरःसरं परमावश्यकं संविधानं विधाय स्वविषय वर्तिनः संभावितजन्यान् राजन्यवंशा जन्यान् सुविकटान् भटान् यथास्वं प्रबोध्य युद्ध विद्यापारङ्गमान्सिंह विक्रमान् धृतातितीक्ष्णवाणभल्लान भिल्लमल्लाश्चाहूय व्याजहार ।

वीराःकिरातान्वयरत्नरूपाः, प्रत्यर्थिलोकान्धपथप्रकूपाः ।
म्लेच्छेश्वरोऽकब्बरशाहनामा, सोऽत्रापिराज्यं सुविधातुकामः॥१७॥
तत्प्रेषितोमानपदाभिधेयः, सोनन्तसेनोऽस्य परोविधेयः ।
योद्धुं समायास्यति शीघ्रमेव, तत्स्वागतं कर्त्तुमलं न केवः ॥१८॥
पुरापि पूर्वैर्भवतां विधातुं, रक्षांस्वभूमेः स्वयशश्च पातुम् ।

आविष्कृतं पौरुषमत्र भव्याः, किंनन्न जानन्ति समस्तसभ्याः॥१९॥
आकर्ण्य ते शौर्यधनाः सुदायाः, स्वस्वामिगादं नतपूर्वकायाः।
शत्रुव्रजेक्रोधकृषायिताक्षा, साक्षाद् यमा देशधरानुजाताः ॥२०॥
प्राहुस्ततः केचन वीरमान्या, शस्त्रस्पृशो जन्यधनाः सुमान्याः।
दास्याः सुतावैरिभटाः सुधातः, किंकर्तुमर्हा भवतोऽन्नदातः॥२१॥
भूमीन्द्र किं ते पुरतः सदम्भः, कृतार्थतामेष्यति शत्रुजम्भः।
पूर्वन्तु भिल्ला धृतबाणभल्लास्तद्वल्लगल्लच्छिदिवा प्रमल्ला ॥२२॥
का शक्तिरन्नप्रद मुद्गलस्य, विलासिनः व्यापृत पुद्गलस्य।
यत्ते भटान् हेतिभृतो विजेतु मागत्यजन्ये पटिमानमेतु ॥२३॥
चिन्ता न कार्या भवताऽत्रनाथ कांचिद् भुजिष्याबयमार्य यावत।
प्रत्यर्थिगर्वक्षतिसावधानाः, सायोधनास्ते भुविविद्यमानाः २४॥
श्रुत्वाऽथ तेषां वचनं सुनिष्ठः शूरोचिते कृत्यविदां वरिष्ठः।
नियुज्य तान् दुर्गभुवः समन्तादाहाथ सामन्तगणैर्नियन्ता ॥२५॥
यूयं समे चाऽपि यथाव्यवस्थं युद्धाय सैन्यं कुरुताशु सुस्थम्।
मानंपुरस्कृत्यशठः समेता, निहन्तु मस्मानिह वैरिनेता ॥२६॥
इत्येवमादेष्टु रनन्तधैर्यस्तं भूरिशौर्य्यं निरवद्य वीर्य्यं,।
यदा तदैवप्रणिधिर्निवृत्य कश्चित पुरोरेः प्रतिपन्नकृत्यः॥२७॥
स्वाम्यर्थसिद्धि प्रवणान्तरङ्गः, पर प्रवृत्ति ग्रहणे कलङ्गः।
विनम्रकायो विहताभिवादः, स स्वामिनं तं निपुणं जगाद ॥२८॥
स्वामिन रिपुस्ते भृशचित्तदाहः, समानसिंहं ललितंतदाह।
चित्तेनिदध्या नहिदेहसादं, त्वं मान वत्साऽत्र मनागविषादम्।२९।
प्रयाय शीघ्रं पृतनासनाथं जित्वानयेस्तं हृदयप्रमाथम।
प्रतापसिंह यदिमत्सकाशं गच्छेद्यशस्तेऽपि महाप्रकाशम् ॥३०॥
अद्यावधिस्त्वं जगदेकवीरः, ख्यातोऽसिवत्सारिनिकारधीरः।
येनापमानो भवतोप्यकारि, जीवेत्सुखं सोऽपि चिरंबतारिः॥३१॥

त्वं तु प्रियः सौम्य महाप्रतापी, सदा सदम्भारि गणोपतापी ।
जानाति लोकः किमुनेति सर्वं, त्वद्बाहुसारेऽथ ममापि गर्वः ॥३२॥
गेहं गतस्यापि सरङ्करूपः, सम्माननीयस्य विमुग्धभूपः ।
न्यक्कारकारी तवयोऽपकारी, कार्य्यस्त्वया किं न निदेशचारी ॥३३॥
त्वच्छौर्य्यवन्हौ शलभायमानः, कस्तादृशः स्याद्भुविभव्यमानः ।
तस्यावनीं प्रेतवनीं विधाय, क्षिप्रं निग्रह्यानय तं प्रयाय ॥३४॥
मध्ये सभं यत्तृणपूरितास्यं, दास्याः सुतं ग्राहितनैजदास्यम् ।
आलोक मालोक महं स्वचित्तं, त्वद्दुःखितन्वेगतदुःखवृत्तम् ॥३५॥
सैन्यं समादाय यथेच्छमङ्ग शत्रोर्विधेयो भवताशुभङ्गः ।
आवश्यकं यत्समराय किञ्चित् संगृह्यतद्याहि महाविपश्चित् ॥३६॥
प्राणायमानोऽस्ति भवान् सदाभः प्रकाशितानन्तमदर्थलाभः ।
तन्माननस्ते मान विरक्षणेन स्वगौरवं विस्तृत मातनोमि ॥३७॥
संग्रामसंपादित कीर्त्तिलाभाः शूरा द्विषद् वृन्द कृते यमाभाः ।
ये सन्ति सद्धेतियुजस्त्वमेद्य, तानभ्य मित्र्यान्कुरुवीर सद्यः ॥३८॥
कुम्भीन्द्रयूथं मदवारिवर्षं शुण्डाविधूतारिमद प्रवर्षम् ।
सल्लक्षणं लक्षण बोधनीयं नीत्वा ततस्तेन सुयोधनीम् ॥३९॥
काम्बोज वाल्मीक मुखान् सदङ्गान् हेषामुखरन् वेगवतस्तुरङ्गान् ।
शफाङ्गसम्मर्दित शत्रुमुण्डान् दासेरकान् धन्वगति प्रगल्भान् ४०॥
भारक्षमान स्वतरास्तथेष्टान्, स्वपोष पुष्टान् बलिनोतिहृष्टान् ।
नयन सम संगरभू विलासी, भूपास्तथा भूरियशोविकासी ॥४१॥

इति दुर्भाव भरित मतिना यवनपतिना प्रचोदितः आततायिभिस्तदनुयाभिश्चानुमोदितः विस्मृत स्वजातिविद्वेषपरिणामोऽनुभूतापमानापनोदकामो मानसिंहः वर्धिष्णून्नताधिकारतर्षः संजातहर्षप्रकर्षस्तत्र भवतानाथलोकमवता मुमूर्षुरिव संग्रामं चिकीर्षुः चतुरङ्गबलसमेतो विजीगीषालालायितचेता महादुर्हृद्भिः कतिचित् सुहृद्भिस्ततः प्रचलितः पर्य्याप्तरूपयुक्तोपकरणसंवलित इति देशदेशान्तर

भ्रूमग्ग बलिना ललाटतटन्यस्ताञ्जलिना विश्वस्तरेग्ग तेन गुप्तचरेग्ग कर्त्तव्य समाहितेन यथाकथमपि तदन्तः प्रविश्य यथासमासादितं तदेव यथार्थरूपेग्ग प्रतिपादितम्। भीरुजनमुदन्तं तेषां तेषामुदन्तम् विद्वन् स म्लेच्छराजं द्विषन् मेदपाट नरेन्द्रः सभ्य जातिकैगविग्गीचन्द्रः विदित राजनीतिरहस्यान् सचस्यान् सदस्यान् समुद्दिश्य निर्धारित मनोज्ञ प्रबन्धः सत्यसन्धः तदुत्साह सम्पदं बुभुत्सुरिव विपदं परिजिहीर्षुः चिरं किञ्चित् विचिन्त्य सुभद्रां मुखमुद्रां विकासयामास। श्रुतं श्रीमद्भिर्भवद्भिर्यदुक्तं मिथ्यात्व दोषनिर्मुक्तं यथार्थोपन्न व्याहारेणाऽमुना चारेण पूर्वमेतद्भवद्भिरस्माभिश्चयत्समभावितदेवमान सम्मानं सम्पादन व्याजेन विधित्सुः स क्रूर स्वभावः सदाचार दवदावः कुलकलङ्किनं निःशङ्किनं मिथ्याभिमानं दुरमानम.नं पुरस्कृत्य हतशेष नः प्रदेशं निः शेषयितुं कृतवानेकरङ्ग वैरिभट भङ्ग चतुरंङ्ग प्रबलंबलं प्रहितवान, अतः परं यथावसरं यथाशक्ति प्रति विधित्सापरै साधुविचार धरैः शूरप्रवरै र्भवद्भिरपि तथा प्रयतितव्यं यथाऽसंख्याताःख्याता अपि शात्रव व्राताः सविस्तारं बाहुबल सारं साधुपरिचिनुयुः। भाग्यादेवतावत् क्षत्रिय हीराणांवीराणां कृतेसम्पद्यते, खल्वेवं विधोऽवसरः-लोकप्राणयानुकूलसरः—यत्र विजये सति यथेच्छा भोग संप्राप्तिः प्राण व्ययेच सुरसद्म दिव्य विभूत्यवाप्तिः स्यात्। अथतेऽपि स्वदेशोद्धार चिन्तालीनाः शौर्य्य नदीनाः सातिशयं सयत्नं पृतना क्रमणनिश्चयं कर्णशाला प्राधुणीकृत्यवैरायमाण निवहं पुरःस्फुरन्तमिव संकलयन्तस्तं निहन्तुं समुत्तोलिततीव्रायोधनाः संग्रामधनाः संदष्ट करीन्द्राः पारीन्द्राइव कृत क्रमा विप्र कृत नागा इव अक्षमा कृत निकारा महोक्षाइव सहुंकार फुंकारा। समानं यवनलोक प्रधानं देहलीशं निरीशंकर्त्तुं युयुत्सोन्मुखं मातृमुखं तदनुयापि भृत्यवर्गं च सहन्तुं प्रतिजज्ञिरे शरीरं वा पातयेयं, कार्यंवासाधये यमिति प्रत्येकं मनसि निर्धार्य परित्यक्त पुत्रकलत्रादिस्नेहाः, प्रकटितोभय लोकसहायक धर्मोपाजन परमेहाः महामह स्विनंमनस्विनं सदा समुन्नत भालं स्वमहीपालं नय समय निचितं धीरधुरीण जनोचितं सार सम्पन्नं पुनरुक्तादि दोष विभिन्नंवचनं प्रावोचन्। आर्य क्षत्रिय कुलैकवीर विरोधिवार वारिद समीर?

वयमिह भवदाज्ञा कारिणः सर्वएव,
कुमति रिपु विनाशे तत्परा स्मः सदैव।
कथय कथय धीमन किं विधेयैर्विधेयं,
स्वकजनि वसुधा ये जीवनं किंमदेयम् ॥ ४२ ॥

यावज्जीवनं भवन्ति देशानुगुणं सुनि पुणं, कृतार्य्य धर्म विरोधं तंदुर्वोधं विनेतुं स्वजाति गौरवं चोन्नेतु सर्वथाऽपि सन्नद्धाः स्म जाता। परंतस्यारातेः पृतनाः प्रतिनीकानीक-प्रयत्न शत शातन यतनाः, धर्म युद्धाप्रिय भटाश्रभद्रा गणनादरिद्राः सन्ति—याश्च वनराजय इव कृत शिलीमुखोत्पाताः, कल्लोला इव महा लोलाः, करीरपङ्क्तय इव सदा पल्लवाः, वात्याइव रजो बहुलाः, गृध्राइव मांस दृष्टयः शशादना इव बिबल विपत्तपाताः कुहू निशाइव कृष्णा कूर्चकान्तयः रामो बहु वालाः, वाग्योषित इव पर पुरुष विभूमा अवलम्बितमेवात्रायान्ति तत्तासां प्रत्युद्गम विधि झटित्येवानुष्ठेयः

सचाकर्ण्य वचस्तेषां, धीरोदात्त धुरन्धरः।
दैत्य प्रत्याक्रमोल्लासी शुशुभे व पुरन्दरः॥

उवाच च तान्-शूरावः सत्य सन्धानां, जातिसम्मानचेतसाम्।
श्रुत्वासार मयं वाक्यं संतुष्याभितरामहम् ॥ ४३ ॥

महाधीरा भटा भव्याः सभ्य सम्मानकारिणः,
सहायायस्य विद्यन्ते खिद्यन्ते तस्य शत्रवः ॥४४॥

हरिद्राघट्टकंनाम पर्वतोपान्त संस्थितम्।
विशालं निर्जनस्थानं युद्ध चंत्र विधीयताम् ॥४५॥

धर्मयुद्धाय सन्नद्धा सुश्रद्धा देश रक्षणे।
भवन्तः सन्तुशस्त्रास्त्रै दैत्यामर्षाः सुराइव ॥४६॥

मानस्य मान संमर्दः कर्त्तव्यो मान रक्षिभिः ।
तथा यथा न पश्येयुस्तं परेऽपि सदाक्षिभिः ॥४७॥

रुष्टोऽयातो यतः पूर्वं माननीयस्य सन्निधौ ।
लालितस्तेनसोऽभ्येति मानो मानो पलब्धये ।'४८॥

अहंचापि यथान्यायं पश्यतां भवतां पुरः
आतिथेयींक्रियां कर्त्तुं तस्य वाञ्छामि मानिनः ॥ ४९ ॥

स्वं स्वंकृत्य यथाभागं भवन्तः कृतिनः समे ।
तथा तन्वन्तु सुधियश्चकिताः सन्तुते यतः ॥ ५० ॥

भवत्साहाय्यपोतेन तितीर्षुर्ध्वंसनार्णवम् ।
क्वातेनविना वह्निः प्रदहेद्धास पूलकम् ॥ ५१ ॥

पारीन्द्रा इव इव कुम्भीन्द्रान श्येनाः शिशु शशानिव ।
भवन्तो हन्तुमर्हन्ति, प्रधने रिपु सैन्यकान ॥ ५२ ॥

येशूरादेशसेवायैं दिवंयाता मनास्विनः ।
यद्धेतो र्विद्विषांतेषां रक्तै संतर्पयन्तुतान ॥ ५३ ॥

आर्यवश्यांश्च ये के चिन्म्लेच्छ संसर्ग दूषिताः ।
पूती भूताभवच्छस्त्रैस्तेऽपियान्तु सुरालयम् ॥ ५४ ॥

श्री मन्तोदेश सेवायां बद्धरागा स्तरस्विनः ।
तन्नात्र बहुवक्तव्यं यतस्तत्पिष्ट पेषणम् ॥ ५५ ॥

शीघ्रमेव प्रयातव्यं विधातव्यं यथेप्सितम् ।
युद्ध भूमौ ससंभारं न हिता दीर्घ सूत्रिता ॥ ५६ ॥

इति निशम्यव चोऽश्चित भू भृतः,
सुमनसोऽथ मनोज्ञ पराक्रमाः।
भटवरा रिपुनाशनतत्पराः
प्रमुदिता उदितानन दीप्तयः ॥ ५७ ॥

विनय नम्रमुखाः प्रमुखाः सतां,
प्रथित विक्रम विक्रम विक्रमाः।
कलित धैर्य धनाः प्रधना शया
पुचलितालिता ललितोद्यमाः ॥ ५८ ॥

तदानीं चतैर्देशहित सम्पादन प्रहित मान सै शौर्य्यरसैःदृढव्रतैः यथा महाराज निदेशं निश्चितं युद्ध प्रदेशं समुद्दिश्य भीम मिव सुभीमं धनञ्जयमिव दुर्जयम, सत्यव्रत मिव दृढव्रतम्, महावीर मिवाति वीरम्, बलमिव महाबलम, सुग्रीवमिव विशाल ग्रीवम्, चन्द्रकेतु मिवाराति नाश हेतुम्, विकर्त्तन मिवाहिततमः कर्त्तनम् परिषशीलिय धनुर्वेद सारं सैन्य विसारं समादाय महा हवाय शिविर विशेष स्तुत्य कायां हरि द्राघट्टोमत्य कायां प्रस्थितम।

समङ्गल गीतवाद्यखेलायां तत्प्रस्थान बेलायां च विहित साष्टाङ्ग प्रणामान् विरोधि गर्वकण्डूत्यपनोदकामान, स्वदेशोद्धारक कर्मसमुद्यतान् स्वसुतान वीरप्रसूनाम सार्थक्यकरणानुरागाःमिथ्यामोहापरागाः, प्रयुक्त मङ्गलाशंसन वचन विस्तराः क्षत्रियावराः काञ्चनमातरः सस्नेहं शिरसि समाघ्राय तदुत्साह सम्पत्तिं वर्धयन्त्यः, कर्त्तव्यं प्रतितान् वारं वारं संयोजयन्त्यः प्रोचुः —

पुत्रा यूयं शुद्धवंशजा वीरसुता विक्रमशीलाः,
सभ्यजाति रत्नाकररत्नाः शत्रुशातनप्रोन्नतलीलाः।
सानन्दं रणभूमिमुपेत्य कुरुताहितहित संहारं,
तथा यथा गुणिनोवः शंसां कलयन्तां वारं वारम् ॥ ६० ॥

देवक्षिति देवाप्रियकारि विधौ समुद्धत चित्तानां,
म्लेच्छानां तेषामपि शूराः संभावित दुर्वृत्तानाम।

संग्रामे घिस्रानिन विशिष्टा शरवृष्ट्याऽमर सुखकारं,
वत्सा निर्भय चित्ताभूत्वा रचयत गर्वपरीहारम् ॥ ६१ ॥

पृष्ठ दर्शनं वो न विदध्यु स्मेरमुखा रिपवो दृप्ताः,
प्रेष्ठाः शूरवंश जन्मानो धैर्य्यशालि चित्ताःसृप्ताः ।
रणभूमौ क्षत्रियकुलकीर्तिं रक्षन्तो विक्रमभाजः,
मारं मारं प्रतिभट वारं तोषयन्तु चित्तं सम्राजः ॥ ६२ ॥

क्लैव्यंमास्म यातनः पुत्रा दृष्ट्वांऽनन्त वैरिवरसैन्यं,
किं गजघटां निरीक्ष्य मृगेन्द्रा अपि परिदधते लोके दैन्यम् ।
मातृभूमि रक्षायां प्राणा यदि गच्छन्तियान्तु काहानिः,
लोके यशः परत्र ख लाभो यतः समज्यानिज्यानिः ॥६३॥

पन्थानोवः शिवा भवन्तु प्रभु करुणा रसतो नूनं,
मोहादिकवशतो नहिकार्यं वत्साश्चित्तमयेदूनम् ॥
पार्वती प्रिय सुतो गणेशो विघ्नव्रातं युधिदेवः,
संहरतां तनयाः कृतिलोकैः सम्शादित बहुधासेवः ॥६४॥

धनुर्वेद विज्ञावो गुरवः शिष्य वत्सला आर्य पुत्राः,
आवं आवं युद्ध कौशलं यथा सन्तु तुष्टा * भूत्राः ।
तथा कुरुध्वमार्य्यकुलदीपाः कार्य्यमद्यमांसलबाहाः,
क्षत्रिय जाति परीष्टिकृतेऽयं समयस्त्वेतः शत्रुग्राहाः ॥६५॥

मातृ पितृकुल कीर्तिरक्षिणः सन्तु भवन्तः संग्रामे,
वेतण्ड व्रातेसिंहा इव विलसन्तःशत्रुग्रामे ।

* भुवं त्रायन्ते रक्षन्ति शिक्षाप्रदानेनेतिभूत्राः ।

एवं विध समयेहि सूनवो भवति परीक्षा वीराणाम्,
शुद्धवंशजनिजुषां सुभद्रा वैरिवृन्द वध जीराणाम् ॥६६॥

सम्भावित कुलभवा भवन्तः सन्ति तथा मेधावन्तः,
शास्त्र समय विज्ञा ललितज्ञाः सतांप्रियाःकृति नः सन्तः।
मन्यामहे ततः स्वयमेव प्राज्य गुणो हरि विक्रान्तः,
श्री महाराजो महविभ्राजो भवतां तोष्योऽविश्रान्तः ॥६७॥

यदा तत्र कश्चिद् भटो वैदिकधर्म विज्ञान प्रौढ़ां नवोढां लावण्यसम्पत्तिशालां विनयादि गुणमालां रतितुल्यप्रभां प्राणवल्लभां तदनुमतिग्रहाय सोत्कण्ठं तदुपकण्ठमियाय तदा प्रणय रसवशानलसा सा दूरादेव पतिदेवमायान्तं युद्धवेश विभान्तं धृतकार्मुकेषु सिसंग्रामयिषु परिचित्य गुणैरहीनं प्रत्यासीनं वीर प्रमुखं स्मेर मुखं व्याजहार वीरश्लोकावतारं ससारं गल कलितहारं प्रत्यवं वारं वारम्:—

## वीर [ आल्हा ] छन्दः—

याया यायाः संगरभूमौ निश्चिन्तं मे प्राणाधार।
क्षत्रिय धर्म निधान शूरवर हे भूमीपतिहीरकुमार ॥
दुष्ट सपत्नवृन्द संहारं कारं कारं दुर्जन मार।
पुण्यभूमि भारं हरनाथ शक्ति सनाथ धैर्य गुणधार ॥ ६८ ॥

आर्य्य जाति विद्वेष परा ये क्रूरा दयित धार्मि परिवार।
तेषां पुरो यशो विस्तारय निस्तारय भूमिं भटसार ॥
आलिसमाज मिताहं *यत्ते विक्रम कथा सुखं धुनजार।
लाभं लाभं वीर वधूद्याः सफलयंथ पदमत्रोदार ॥ ६९ ॥

* इता गता-

मुधामोहमयि मोहनमूर्ते मा कुरु विज्ञलोक भूपाल।
दण्डय समुद्दण्ड रिपुलोकं भुज दण्डेन दण्ड नय चाल।
कर्त्तव्यं प्रनिधारयचित्ते चत्रियधर्म धन प्रतिपाल।
साध्वीरतन्य विभाव विकासं कुर्य्यारणे दुष्ट कुलकाल ॥ ७० ॥

अत्तयकीर्त्ति लाभरतचेता दृढ सन्धो मे मङ्गलमूल।
नश्वर विषय विलास विराग प्राणोत्सव शात्रव हृच्छूल॥
चञ्चच्चन्द्रहासचितपाणिःस्तम्भय शत्रुशक्तिमस्थूल।
शूरवधू पुरतो मे मानं मानय लाघव मायदुकूल ॥ ७१ ॥

दैवयोगतो यदि रणभूमौ वीर वीरगतिलाभो जातु।
म.वियोग चिन्ता ते चित्ते तदपि न मनाकूपदं निदधातु॥
अग्निदेव वर वर प्रभावाद् भवतः पूर्वमेव किलनाकम्।
गत्वानाथ दिव्यमुपभोगं भोक्ता हे भवता साकम् ॥ ७२ ॥

वीर सनाभि कथा मुदितानां सखीजनानां पुरतोनाथ।
विशाल वंशमवरोचन दुःखि कष्टमोचनरिपुमाथ॥
कोपशीलचित्ता ते भगिनी परिहासावसरेषुच नैव।
दूना भवतु यथा सा शान्ता कुरु करुणामय कर्म तथैव ॥७३॥

वीर प्रसू पुत्र निज मातु,
मर्तृभक्त सितयशो निधान।
गौरव मुन्नमयेरयिमानि-
ाचबधान॥

क्लैव्यंमास्मगमोयुधिजातु,
प्राज्य शौर्य्य सूनो भटराज ।
गज यूथान् सिंह इव परितः
क्षिपन् द्विषो ननतत्र विराज ॥ ७४ ॥

दैत्यमर्दिनी दुर्गामाता·
भक्तवत्सला सापति देव,
कल्याणं ते युधिसंतनुतां-
ध्याता या ननु मया सदैव ।
दिव्य शक्ति रागम गणगीतः-
पुत्रद्वय सहितोऽमरभक्त ।
सत्रिपुरारिरार्य्य विघ्नानां हन्ता-
भवतुतरां गुण सक्त ॥ ७५ ॥

इति युद्धसन्नाह वर्णनपरः पचमोनिश्वासः ।



# अथ षष्ठो निश्वासः

—०:※:०—

भुवि विदितमहौजा माननीयो विरागी,
तरुणकरुणचित्तो भक्तभव्यानुरागी।
सुरमुनिजनसेव्यो लोकपालप्रधानः,
शमयतु भवतापं चन्द्रचूडः सदा नः ॥ १ ॥

अथवातमन्दशिशिरसुरभिवाते, अरुणारुणकिरणकिरणविभाते परेद्युः प्रभाते, सेनासन्नाहसंकुले युद्धस्थले संजाते—

विकसति रविबिम्बे शूरवर्य्यः प्रतापः,
कलितशिवसपर्य्यः शत्रुवर्गोपतापः।
हरिहरिसमवेगं चेतकं रश्मिनोदं,
हयवरमधिरुह्य प्रस्थितः सप्रमोदम् ॥ २ ॥

ततः प्राभातसुषमावलोकनव्यापृतविशाललोचनं प्रपन्नविपन्नकष्टमोचनं वीरवेशविशेषविभ्राजमानं लावण्यपराक्रममारकुमारसमानम्, उच्चैः श्रवसं शतक्रतुमिव चेतकमध्यासीनं विविधविबुधभटैरहीनं श्रीरामचन्द्रमिव वैरायमाणरक्षोविध्वंसकर्मलीनं करुणानदीनं पथिविराजमानं करिष्यमाणमानापमानं तं राजानं समयोक्तिचतुरः कश्चन सुमुखरस्तदनुचरः, प्रातः प्राकृतदृश्यविभावनसंजातसुखः, सस्मितमुखः, प्रसन्नवर्णरचनं वचनमुवाच। अयिरिपुनिषूदन यशोधन महाराज विक्रमविडम्बितराज! निजकुलनिदानं चण्डधामानं तत्रभवन्तं पुरतः समुदयन्तं समालोकयतथा वैदिकमन्त्रैरूपश्लोक्य कृतार्थयितुमर्हतिभवान् सुविपुलं दृष्टियुगलम्।

यदयं, किरणनिकरशस्त्रैः कालयन् भूतलस्थं,
निबिडतिमिरशत्रुं स्थापयन् सुव्यवस्थम्।
सकलमपि विभक्तं कार्य्यजातं तरस्वी,
रविरुदयमुपैति प्राग् दिशायां महस्वी ॥ ३ ॥

भगवन्नितोऽपिदीयतां मनाग् दृष्टिर्दीनलोकलोचनामृतवृष्टिः—

यदसौ-निशि वत वनितातो येन लब्धोवियोगः
नरवर विधियोगात्सोऽद्य संजातयोगः ।
अनिभृतमुद मेतिप्राणितोत्साहबन्धः,
कलयति कलकेलिं चक्रवाकोमदान्धः॥ ४ ॥
स्फुटति जलजराजिः षट्पदव्रातगुञ्जा,
प्रति सर इह राजन् भान्ति पाठीनपुञ्जाः ।
शिशिरशिशिरवाता वारिसम्पर्कवन्तः,
विदधति तनुसौख्यं मन्दमन्दं चलन्तः ॥ ५ ॥
नलिनदलतलस्थं भाति वा राजहंस,
मरकतगतमुक्ताकारमाप्र्यप्रशंस ।
जहति विहगमाला नीडशालाः सुभद्राः,
श्रवणसुखदगानं तन्वते वीतनिद्राः ॥ ६ ॥
तरुणहरिणवर्गा मार्गमालोकमानाः,
प्लुतगतिपरतायां सन्ति दत्तावधानाः ।
तव पथि वनदेवाः पक्षिरावैः समन्ताद्,
विदधति ननु नाथाऽऽलोकशब्दं पुरस्तात् ॥ ७ ॥

महाराजोऽपि चातुरीविशेषचमत्कृतां, विनयसंपत्तिसंभृतां सरसप्रसन्नपदां प्रमोदप्रदां सयुक्तिं तदुक्तिं समाकर्ण्य पन्थानं समयाच किंचिदग्रतो निर्वर्ण्य तं प्रतिजगाद सप्रसाद इति—

अङ्ग क्रूरताफलमुपभुञ्जानं प्रतिनिशं वायसपरिवारसंहारंप्रत्यभियुञ्जानं महामदान्धं दिवान्धं सम्प्रति सनिर्वासनं निरीक्ष्य त्वमपि समुचितशिक्षाभाजनं भवेरिहभवे ।

स्वककुलदृढवैरं स्वैरमाक्रम्यकाकाः,
पुरत इह सकांकांरावकाः कालभाकाः ।
श्रितघनतरुकाण्डं त्रोटिकोटिप्रहारैः,
विदधति वत भिन्नं रक्तधाराप्रसारैः ॥ ८ ॥

अतः परं चेतो विलोभनीयं किञ्चिदितोऽपि विलोकनीयम् ॥

कुमुद ततिरिदानीं कौमुदीने विलीने,
समुदयति तथाऽस्मिन् भास्वरे व्योमनीने ।
भवति मलिनकान्तिर्विप्रयुक्ता सतीव,
विधिविनहितमेतत्तत्त्वमत्राप्यतीव ॥ ९ ॥

विहगनिकर आराच् शाखिशाखानिवासः,
परमसुखसमेतो दिव्य नानाप्रभासः ।
भगवति जगदीशे बद्धरागोनुगानं,
श्रवणसुखनिदानं गायति ग्ज्ञानिहानम् ॥ १० ॥

इतिवदन्वदतां प्रवरः, परप्रबलशक्तिविनाशनतत्परः ।
सुजवनेन हयेन हरिप्रभः, समरभूमि मियायमहामनाः ॥११॥

तत्रभवन्तं विक्रमवन्तं तेजोविशेषभाजं महाराजं दूरादेवसमायान्तं कृतमायान्तं दर्शनामृतेन स्वजनान्पान्तं तं महान्तं समालोक्यतत्रस्थिता भाविसंग्रामव्यवस्थिति प्रखिता उच्चारितालोका लोकाः ससंभ्रमं समुत्थाय पराभ्कम्पया कतिचित्पदानि तत्पुरतोऽभियाय ललाटतटचुम्यञ्जलयः प्रमोदविस्फरितलोचनतयासमुन्मिषितभ्रूवलयः, आनतपूर्वकायानिर्मायास्तद्व्याहृतसान्त्वनावादाः संभृतमनः प्रसादाश्चतस्थुः । अथ शिष्यान् गुरुरिव कर्त्तव्यंप्रतिसमाहितचित्तान् शूरतादिगुणगणवित्तान् स्वदेशहितास्तान् समयोचितं नीतिपरिचयसमावृतं प्रेमाचितं किंचिदुपदिश्य विश्रामलाभाय सकलसुखसाधन सम्पन्नं पटभवनंसमुपेत्य परमरयात्तस्माद् हया दवारुरोह ।

तस्याश्वपरिचर्य्याविचक्षणः शुभलक्षणः पुरुषार्थी सारथीरयवन्तं सम्पूर्णं शुभलक्षणैर्लसन्तं प्रशस्तधामान चेतक नामानम्मनोहरं वाजिप्रवरं पल्ययनादि भाररहितं युक्तिसहितं विधाय कंचन कालं यावत्तावत्तत्प्रस्वेदशोषणायेतस्ततो मन्दं-मन्दंभ्रमयित्वा परिश्रान्तिसंगानितदङ्गानि चमर्दयित्वा सुन्दरायां मन्दुरायां तं संयम्य तद्भक्षणार्थं सौहित्यसम्पादनाऽऽर्थं मरकतमणिसमभासं महामेथिकादिघासं

१ काष्ठपादिका खुटपावडी ति लोकेप्रसिद्धम् । २ विधिर्ब्रह्मविधानयोः । ३विधिवाक्ये च दैवे च प्रकारे कालकल्पयोरित हैमः । ४ परकाष्टानुशेगोत्कर्षे समुद्रः—विषाणोत्कषर्योश्चाथ शृङ्गः स्यात्कूर्चं शीर्षके इति मेदिनी ।

विसर्ज तदनुच सगुडशर्करं वाजिमन्थदर्दरम्-बन्धुरायां तुन्दरायां संभृत्य तन्मुखे योजयामास तृप्ते च तस्मिन् तत्पिपासापनोदायततः समुत्थाय साधुरूपात्कूपात् सुविमलम् जलं लाहमयेनोदञ्चनेन ससु द्धृत्यपाययामास, काष्ठपादिकया चासक्तत्वच्छ कुदपनयन् समीपएवतस्य विशश्राम समहोद्योगधाम ।

परत्रतद्विपक्षसेनानायकः ससयायकः

अगणितबल सहितो म्लेच्छराजप्रयुक्तः
समरविजयकामो नैकसामन्तयुक्तः ।
विगतसुकृतमानो मानसिंहाभिधानः,
स्वजन निधनरागोप्यागमद्वीतमानः ॥ ११ ॥

मेदपाट शिवरा दतिदूरं, सेनावृन्दं गर्वितशूरम् ।
वासितवान् विधितोविधिहीनः,
४परपीड़ा रसभृङ्गनदीनः ॥ १२ ॥

समुचिते नानाविधसुविधानिचिते सविशेषे सेनासन्निवेशप्रदेशेनिश्चिते यवन भूपतिमतेन तेन सैनिका विशिष्टाः समादिष्टाः, भोभोः कर्त्तव्यपालनतत्परा अस्मत्सैन्य धुरन्धराः सदोन्नतबन्धुरकन्धरा वैरिप्राणप्रध्वंसकौशलधराः प्रियवराः शीघ्र मेव प्रथितमतिभिर्भवद्भिर्यथास्वं कारयितव्यानि भव्यानि-भव्यानि विस्तारमयानि पटभवनानिसक्रायमानानि विसर्जनीयाः शकटी संयुक्ता विश्रान्तिनिर्मुक्ता सुभारवाहाः अनड्वाहः, इक्षुदण्डादिभिश्चतर्पणीयाः, अगजा गजाः, उत्सान्नीयः सैरिभनिकायः सुमहाकायः, संभृतविमलजलेषुपल्वलेषु । गुञ्जदलिकमलिनी संवलितसरःसु सरस्सुच । भरवहनाग्रेसरा वेसराश्चखादनीया रुचिविभातं ग्रन्थिसार करीराङ्कुर जातम् । प्रचारणीयं चाधिघनवनं क्रमेलकमेलकम् ।

तस्याज्ञयातु परया त्वरया प्रबन्धः,
किं नोव्यधायि विधिना विधिबोधशीलैः ।
वासादिकस्य किल तैः किमुतद्विधाना
माज्ञावचोऽपिविफलं भवति प्रभूणाम् ॥१३॥

यथाविधि जातायां तद् व्यवस्थायां मानसिंहेन सलीमादिप्रमुखजनानुमतेन समीपवर्तिनं निदेशानुवर्तिनं प्रत्युक्तं लेखनीं मसिभाजनं सनिवृत्तकं कर्गलं चोपानयेति सोऽपि तत्प्रचोदितस्तस्य वयस्यैरनुमोदितो यथादिशति देव इति समुदीर्य झटित्येवमासी पात्रादिकमादाय तत्पुरतः स्थापयामास अथ गर्वपरीतेन तेन पत्रिका मुल्लिख्य महा मुखरस्य कस्याचित् सन्देशहरस्य हस्तेदत्त्वा प्रोक्तमस्मद्वचनाद्वक्तव्यस्त्वयाऽपि भाविभूरिसन्तापः सप्रतापःपापः, यदि ते चेतसि जागर्तिकामिनीजनवैधव्यव्य-लीकचिन्तातर्हि ।

बद्धाञ्जलिः सविनयं तृणपूरितास्यः,
दास्याः सुत प्रणतिमान् कृत राजदास्यः ।
रेरे प्रतापतरसैव समेत्य मूढ—
मानं विहाय भवमानसमाश्रयस्त्वम् ॥१४॥

सोऽपिपत्रिकां तामादाय कृतप्रणामस्ततः प्रतस्थे-यथावसरंच महाराज परिसरं समेत्य प्रणतिततिपूर्वकं तस्मैतां प्रत्यपादयत् ततश्च कर्तनीसुकर्तितश्मश्रुजालः सुवितीर्णकूर्चबालः, शितिशिरोवेष्टनवेष्टितोत्तमाङ्गः, स्कन्धराजितचित्रविचित्रोत्तरासङ्गः स्थूलपटार्धोरुकावृतजङ्घः, सूत्रपट्टिकासंयतपिण्डिकतया सहसापरिशीलितमार्गमङ्घः सानुपदीनापादत्राणमडमडायितपादः, समभ्यस्तदेशदेशान्तरभाषासंवादः, संधारितधूस-रितनिचोलः पत्रावलिवेष्टनसनाथकोलः, पारसीकभाषावर्णाङ्कितताम्रपट्टिका बद्धपरिकरः, सन्देशहरः कथमयं यवनकटकाद् विकटाद्विभातएव समायातः। इतिसकौतुकं विस्मारितलोचनपुण्डरीकाश्रभीकाः श्रोतव्यसंग्रामसमाचाराः केचन राजपरिवारयोधवाराः, अपितदानीं संगत्य सुधीना महाराजाननसंमुखीनाः स्थिता अभूवन् । सभूमिपातिरपि सुमतिः शस्तेन वामहस्तेनतांपत्रीं गृहीत्वा सदिच्छस्तं पप्रच्छ किमत्र लिखितंभो यथेच्छकामिना ते स्वामिनात्वन्मुखेनाऽपिकिंप्रहितं स्वहितं समपेक्षितोत्तरं किमपि सन्देशान्तरम् तथा चेत्त्वमेव पूर्वनिःशङ्कंश्रावयनो मनागपि चेतसि स्वानिष्टं विभावय ततः परमेववाचयिष्यते पत्रिकेयमिति । सुरभितैलचिक्कणा-यितविशालबालो वाचालोऽपि स प्रचण्डमार्त्तण्डमिवमहाधामानं प्रतापनामानं

---

मद्यः—गमनम् कोलः क्रोडः —कोलोकोलिफले क्लीबं पिफली च द्वयोःस्त्रियाम्नाङ्क पा लौशनी शिवत्रे वारहोत्सङ्ग पेलके, इति मोहिनी ।

सूर्य्यकुलप्रदीपं तं महीपं निरीक्ष्य विष्कम्भितवाक्प्रवृत्तिः शीघ्रमेवततोभिलषितकुशल निवृत्तिः, भीतभीतइव भालस्थलमुकुलिताञ्जलिः कथमप्यविचाचलिः साम्रेडं साग्रहं च पृष्टोऽपि न किंचिदपि तद्वा र्त्तानि क मुवाच । किंच शरणागतप्रतिपाल श्रीमन् भूमिपाल यदपि वृत्तजातं तत्सर्वं मत्रैव पत्रिकायामायातम् , तन्निवृत्तक मुन्मुच्य ततः पत्रिकामेनां निः सार्य्यवाचयतु देव इति स्खलितवचा न्यवेदयत् । अथ महाराजो १ऽव्याजो वैरायमाण २ सूतं दूतं यथोचितस्थाने समुपेष्टु मादिश्य दद्रू त्तान्त नितान्त शुश्रूषोत्कलितान्तरङ्गान् समुत्तोलितभ्रू भङ्गान महापराक्रम विश्रामान् संगरकामान् विकटसपत्न ३ निर्द्दटान् भटान् , श्रावयन् वाचयामास तच्चेति—

श्री मन् प्रताप नृपते यदि मानसिंह-
मान व्यतिक्रम विधिं प्रति तेऽनु तापः ।
दिल्लीपतिं निजपतिं च विधातुकाम
श्चेत्त्वं तदैव कुशलं गणयेः स्वकीयम् ॥ १५ ॥

श्रीमानुदारचरितः शरणागतेषु
दिल्लीश्वरो ननु सदा करुणां बिभर्ति ।
स्वांचाऽपि स प्रणतमानतभव्यकामः
कामंक्षमिष्यत उदात्तयशोऽभिरामः ॥ १६ ॥

दातुं निवापाञ्जलयो यदीष्टा
भूयोऽपि ते स्वीयसुधाभुजेभ्यः ।
तदातु दिल्लीश्वरपादपद्मं
भजस्व राजन्नतिशीघ्र मेव ॥ १७ ॥

अन्यथा

श्वोवा परश्वो युधितेऽभिमानं
विमर्द्य मानो विहितापमानम् ।

१ व्याजः शाठ्ये प देशे इति मेदिनी २ सूतम् प्रेरितम्
सूतस्तु सारथौताचणी क्षत्रियाद् ब्राह्मणी सुते वन्दि पारनयोः पुंसि प्रसूते प्रेरिते त्रिषु इति मेदिनी । ३ निर्द्दटो निर्दये स्मृत इति विश्वः

निबध्य रे त्वां निजभूपतीनां
निपातयिष्यामि पदाम्बुजेषु ॥ १८ ॥
अतः परं यत् प्रतिभातु भव्यं
तदेव नः प्रत्यपिसूचनीयम् ।
कर्त्तव्य बोधेऽधिकृताहितैषिणः
किं नेति जानन्ति जना मनीषिणः ॥ १९ ॥

इति बोधयति कोऽपि भवद्धितकर्त्ता दिल्लीपतिनिदेशधर्त्ता—

ततः, निशम्य पत्रीं स्फुरितोरुवाहाः
शस्त्रस्पृशोभ्रूकुटिमादधानाः ।
वीराः समस्ता नृपतेः पुरस्थाः
सुस्थाः समुत्थाय वचांस्यवोचन् ॥ २० ॥

अहो म्लेच्छसम्बन्धदूषितमतेः सम्पत्स्यमानदुर्गतेः कुलकलङ्कस्य तस्यैवं विधा धाष्टर्यशाख्याभिव्यक्तिरसक्तिः, समजनि निर्व्याजं महाराजं प्रत्यपि । धिक् तं न राधेयः क्षत्रियजातिसमुत्पन्नोऽपि तामेव रसातलं निनीषुः । प्रतिफलमेवतदनिष्ट कामस्तत्प्रतिपक्षिसमुन्नतौ भृशंयतमानः साभिमानः सुकृतिवरान् क्षत्रियलोकधुरन्धरान् सुदृशो महारण सदृशोऽपि पराभवितुमुज्जृम्भते—

निर्लज्जो दुर्भावपरीतः, सोप्येवं लेखेऽलमभीतः ।
राजाज्ञाचेत्पूर्वं सद्य स्तं द्राक्ष्यामस्तत्रैवाद्य ॥ २१ ॥

अथ शक्तिसिंहाग्रजो महाभुजोऽत्यर्थक्रुद्धान् सद्यः संरोचितमानापमाननिमित्त युद्धान् प्रथितमानान् स्वजातिगौरवगोपनदत्तावधानान् धैर्य्यवद्भिर्भवद्भिस्त्वरान कार्य्या यथावसरमेव स प्रलापी महापापी नियम्यः, मुखमस्तीति वक्तव्यं दशहस्ता हरीतकीति वचनानुसरं तद्वचोऽपि निः सारंतत्किमतोर्नाशङ्कनमितितान् समाश्वास्य तां पत्रिकां खण्डशः कृत्वा दूतं प्रति व्याजहार—

अरे वक्तव्यस्त्वयात्स मद्वचनात् पातसाहसम्बन्धिकुमारः । तत्सेनाकर्णधारः महादुरभिमानः समानः, संगरभूमावेव यदास्माभिरुपस्थास्यते तदैव ते पत्रिकायाः प्रतिवचः प्रदास्यते, इति—

सोऽपितस्मै विहितप्रणामः स्वात्म भव्यकामः सभय इव विद्रुततरगतिः प्रमुग्धमतिः स्वस्वामिसमीपं समेत्य यथावृत्तं वृत्तं सकष्टं विस्पष्टंनिवेदयांबभूव । ततःततस्त्यवृत्तान्तनितान्ततान्त इव ससहचरपरिवारः स मानसिंहकुमारः किमपि विचारयन् क्षण मांसाचक्रे—

तदनन्तरं मिथः संमन्त्र्य प्रमुखसेनानायकान् लब्धभेदनाव्यर्थसायकान् समाहूय १ गुह्यं २ व्यूह समूहविषये प्रतिबोधयन् समुत्साहं चतेषांवर्धय न्नाह ।

येषां ३ वाहा बलेन वीरा जित्वारातीनां व्रातं
साम्राज्यं प्राज्यं संलब्धं चारुरूपतोवा त्रातम् ।
साम्राजा दिल्लीनाथेन श्वस्ते यूयं संग्रामे
कुरुतात्याहितरुचिं यथेच्छं हंहो प्रत्यर्थिग्रामे ॥ २२ ॥

अस्माभिः शक्तिर्हिंससनाभिः पुनरपि सम्राडाधिपत्यं महाप्रशस्त्यं स्वीकारयितुं दुष्प्रवृत्तेश्च निवारयितुं प्रतिबोधितःपरं सकालबोदितोनाजीगधत्स्वात्मरक्षणमपिनः शिक्षणम् , धृतमहाहठःशठः । दुर्वत्तयो राजलूननृपप्रभृतयोमहामौढ्यवारिणः स्ततसह चारिणश्च रणमेवनिर्विकल्पंतत्कल्याणकल्पं समर्थयन्तोऽस्मत्कृतप्रबोधनं व्यर्थयन्तेस्म अतोयुद्धं विनानाधुना तस्याहितस्य वशीकारे विद्यतेप्रवरं किमप्युपायान्तरम् । इति निश्चत्यतस्मिन् मानसिंहेततोनिजविश्रामस्थानं प्रस्थिते यवनकुलोद्भवेन केनचित्सैनिक निवहेन मिथोरहसि सकौतुकविकासं साट्टहासं दत्तकरतालं विकसितदन्तकोरकजालं भ्रूनृत्यल्ललितभालं च समालपितम् । दिष्ट्या हिन्दूजनद्वारैव सम्पत्स्यतेनः समीहितम् ।

चिरादत्त बहुतापे महापापे परस्मिन् प्रतापेतस्मिन् विजिते प्रायोऽत्र सर्वत्र भविष्यति स्वेतरावण्टकं निष्कण्टकमाधिपत्य मुदात्तमतेरस्मत्क्षोणीपतेः । अयमेव दुर्मुखोमातृमुखोऽशिष्टोऽवशिष्टो यः समस्तभव्यप्रसारे मरमात्मपरमपूतदूतनिर्दिष्टोत्कृष्टसिद्धान्त प्रचारे प्रत्यूहव्यूहरूपोभूपोऽभूत् । अथ तत्रभवति भगवति किरणमालिनि व्योममध्यभागविहारिणि सति मध्यान्हभोजनसमयः समजनीति प्रतीत्य ततस्तैः समस्तै स्तन्निमित्तं प्रस्थानंकृतम् ।

पाकेच सिद्धे क्षुधिता अनेके योधाः समाहूतिमुपेत्यतत्र ।
उपस्थिताः स्यूतकटासनेषु आसांबभूवः स्वमहानसेषु ॥ २३ ॥

१ गुह्यं रहस्यु पस्थे च गुह्यः कमठ दम्भयोरितिमेदिनी २व्यूह स्याद्बल विन्यासे ३ वाहा बुजाः—

एकैकस्मिन् विशाले मृण्मयस्थालेऽशनपदार्थान् परिवेषय्य तत्रैवसम्भूयस्वादुं-कारं बुभुजिरेतत्पात्रसन्निहितेषु शरावेषुधृतानि समुत्तेजकरसवारभूयिष्ठानि नानाविधानि शाकानि मांसानि चयथाविधानं पक्वानि यथारुचि भुञ्जानास्ते वर्णनातीतमेवप्रमोदंलभन्तेस्म, मांसशराविकासंस्थितानिसूदमाणिसूदमाण्यस्थीनि चूतफलानीव चूषंचूष स्वासनंसमयैवनिदधुः। तीक्ष्णतरमरीचिकादग्धमुखाः समनुभूतस्वल्पेतरासुखा, अश्रुकणस्रावसमुन्नकपोलाः, सकलितललितकूर्चकान्दोलाः, भूयोभूयःसीत्कारंकुर्वाणाः, शीघ्रमेवककर्नालिकातोमुखंसंयोज्य यथाक्रमंजलंपपुः। तेषुचकृतभोजनेषु सत्सु अन्येऽपि तथैवागत्यसग्धिसुखमनुभवन्तिस्म।

अथपरिशीलितधूमपानाः केचनचतुरङ्गक्रीडयामनोविनोदयामासुःकेचिच्चदुरोदरपरिशीलनेनचेतस्तोषयामासुः, तथापरेश्शृङ्गारप्रधानाभि राख्यायिकाभिः स्वान्तं प्रसादयांबभूवुः, केचनसंगीतासक्त्या हृदयमाल्हादयामासुः एवंयथाभिप्रेतव्यसनेषु तैरवशिष्टमहः संयापितम्।

उपगतेतरणौवरुणालयं समुदिते च निशाधिपतौ तदा।
विकसितं कुमुदैः समुदैरिव सरसिजैः समकोचि हतै रिव ॥ २५ ॥

क्षुब्धेखगेव्यपगते भुवनप्रकाशे, सत्पक्षरोचितगमा नु विहङ्गमाला।
शिञ्जावि लापसहितं स्वकुलायपाप, धूकस्तु हिंसनरसः प्रचचालपापः॥२६॥

अन्येद्यु रायोधनभूमिमध्ये, सेनाद्वयी प्रोन्नतवीर्य्यगर्वा।
शस्त्रास्त्रसंचालनकौशलाढ्या, जयश्रियो लाभकृतेऽत्रतस्थे ॥ २७ ॥

शिवशिवभवशम्भो रामकृष्णेति शब्दान् सविनयनयभाजो भक्तिपूर्वं समन्तात्।
श्रावणपुटकपेयान् मेदपाटीयशूराः,कलितसुकृतचर्य्या भावयामासुरुच्चैः॥२८

विधृतशितिपताका आर्य्यविद्वेषिताकाः,
अमिललितवपुष्काः १ किष्कु २ मुष्कास्तुरुष्काः।
प्रतिबलबलभाजस्तेऽपि अल्लाखुदेति,
श्रावणकटुविभातंवाक्यमुच्चैस्तथोचुः ॥ २९ ॥

रणसिंहाद्यवाद्यतुमुलध्वनिमो श्रावंश्रावंतुष्टाः
स्फुरद्भुजाः शूरा गर्जन्तः सिंहा इव विक्रमजुष्टाः।
पुरोविलोक्य वैरिभटवृन्दं सौम्या अपिभीमाकाराः
संदृष्टा राजन्या जन्ये धृतनिशितास्त्र शस्त्रवरवाराः॥३०॥

वेतण्डाः शुण्डादण्डेन मदमत्ताधावं धावं
कर्णशष्कुलीदारुणरावं निरन्तरं भावंभावम् ।
श्रोत्रतालसंधुतमधुलेहा गिरिकूटाभाः सैन्यानां
तर्जयन्त इवसिंहगर्जनं रेजुरहो पृथुजन्यानाम ॥३१॥

हेषां कुर्वन्नुन्नतकर्णोरणवाद्यध्वनि माकर्ण्य
खननभूमितलमङ्घ्रिपुटेन कुप्यञ्जवनो निर्वर्ण्य ।
धावन्तं पुरतो हयमन्यं स्वाश्ववारयत्नेनाऽपि
वल्गाकृष्टिवशादपि कश्चित्तिष्ठति वाजी नक्वापि ॥३२॥

अथप्रसिद्धवंशकरीराः केचनक्षत्रियवीराः प्रकृष्टमदान्इतस्ततो वल्गतः प्रतिबलभटान् निर्भर्त्स्य न्यगादिषुः ।

रेरे म्लेच्छा अधममतयो यूयमत्रातिदृप्ताः
लुप्ताः शस्त्रैः स्फुरतपुरतः किं मुधायाति भूपः ।
रूपाधारो रविकुलमणिः सप्रतापो रिताप:
प्रत्यासन्ने सतिमृगपतौ वल्गनं किं शशानाम् ॥३३॥

श्रुत्वा तेषां परुषवचनं मन्युवेगं दधानाः
संरक्ताक्षाः सुकृतविहतिन्यक्कृता यातुधानाः ।
प्रत्यूचुस्ते करधृतमहातीक्ष्णकौक्षेयजालाः
किं रेजाल्माः पुनरपि तथा वक्तुकामाः सकालाः ॥३४॥

होहीहीही विकृतमतयो हिन्दुराजात्मलाभाः
किं रे किंरे विपुलमहसां सोऽपि नोऽनिष्टकर्त्ता ।
भर्त्ता वो हुँकृतिपयभटः शाठ्यमूर्तिर्दुराशः
कर्त्तुं किंवा प्रभवति रणे तुच्छशक्तिप्रकाशः ॥ ३५ ॥

युष्माकं स क्षितिपति ररे हीनवृत्ति र्हताशः
किंदिल्लीशप्रबलबलतो नैव संप्राप्तनाशः ।
यस्यादेशे बहुबलजुषः क्षत्रियाश्चाऽपि मूढ़ाः
सन्तिष्ठन्ते वयमपि समे केऽपि तस्यैववित्थ ॥ ३६ ॥

अस्मत्पृष्ठे भुवन विदितो मानसिंहोरिमारः
किंनो ज्ञातो विपुल महिमाऽनवतसेना प्रसारः ।
मृत्योर्ग्रासी भवितु मिहरे किं मुधा यूय मद्य
संग्रामे हाऽऽगमत मठरा धावते तोति सद्यः ॥३७॥

अथ तेऽपि महानुभावाः सपत्नवनलावन स्वभावाः सुधीराः क्षत्रियवीराः शस्त्राण्युदस्य तान् सन्तर्जयन्तः प्रावोचन् ।

रेरे धूर्त्ताः प्रमदवचनाः कस्य शंसां तनुध्वे
भीरो स्त्रैणप्रणयनिरतेः कूटनीति प्रसक्तेः
तस्यादेशं दधदिहमहापातकी यः स्ववंशं
देशद्रोही विकृतमकरोत्सोऽपि किं शंसनीयः ॥३८॥

अथ संग्रामारम्भ पिशुनवाद्यध्वनौ कर्णाध्वाध्वनीने सति अनभ्यस्त दैन्यसैन्यद्वयसैन्याः तच्छ्रवणसं प्रकटित महाजन्याः मिथः कृतोत्पातं प्रहारजातं कुर्वाणाः कीनाशकिंकराइव विकरालं रूपं बिभ्राणा व्रणरजिस्रु तरक्तधारासिक्ताङ्काः प्रफुल्ल पलाशसङ्काश मूर्त्तयो विरेजिरे ।

कटितट कोशित तीव्र कृपाणाः शक्ति धरा हृत वैरि प्राणाः ।
अश्ववार वाराः प्रतिपक्षान् प्रारब्धाःकर्त्तुं द्रुतिलक्षान ॥ ३९ ॥

भिल्ला महाबलास्तत्र को दण्डोदण्ड पाणयः ।
शरवृष्ट्या रजस्तेषां शमयामासु रूद्धतम् ॥ ४० ॥

नाराचै भिन्दिपालैश्च किराता लक्ष्यभेदिनः ।
नाशयन्तो महाशत्रून सिंहनादान् वितेनिरे ॥४१॥

तेऽपि क्रुद्धा महाघोरं यवनाः कालसंनिभाः ।
प्रत्याक्रम्य ततोजघ्नु रधिमर्म तथैव तान ॥४२॥

क्षरन्मदवारिभ्रमद्भ्रमर गुञ्जन वाचालित कुम्भस्थलाः । शुण्डा दण्ड प्रचण्ड प्रहार प्रविदारित प्रत्यासीदत् प्रत्यर्थि प्रबल बलाः सचीत्कारोत्तुङ्ग दन्तद्वन्द्व विघूर्णित चूर्णित व्यूह विग्रहाः संक्रुद्धाधोरण धुरीण प्रणुन्नाङ्कुश दुनिर्ग्रहाः प्रकृष्टबलाः दन्तावलाः केचन रणाङ्गणे योधप्रमुखानपि हाहा तोबा शब्द मुखान् सम्पादयामासुः ।

शूराः केचिन्मुदित मनसश्चन्द्र हास प्रहारैः
कुम्भीन्द्राँस्तानभिमुख मुखान् द्रावयामासु रुग्रान् ।
शुण्डापाताद् विकलगतयः केऽपि तत्रैव पेतुः
तेषां मध्याद् गिरिवरनिभाः पृष्ठसंस्थैः सहैव ॥ ४३ ॥

केचिच्छूर प्रतिभटगणं स्पष्ट नाना प्रहारं
कुन्तै स्तीक्ष्णै ररुणनयना निर्दयं सन्निकारम् ।
दारं दारं रणभुवि रुषा पातयामासु राशु
वीराः केचिद्विविधु रपरे शक्तिभिः शक्तिभाजः ॥४४॥

अन्ये केऽपि प्रविततबलाः क्षात्रधर्मानुशीलाः
प्रत्यासन्नं प्रतिबलगणं हेतिवृष्टिं सृजन्तं ।
दृष्ट्वा क्रुद्धा झटिति निपुणं पातयामासु रस्त्रैः
तद्वालं वा चरण पतितं कौतुकेनैवतेनुः ॥ ४५ ॥

दृष्ट्वा तेषां प्रथितमतयः क्षत्रियाः क्रौर्य्य कृत्यं
क्रुद्धा सिंहा इव गज घटाः केचनाशूपसृत्या ।
हारं हारं विपुल तरस सर्वतस्तान् किलास्त्रैः
शस्त्रैस्तीक्ष्णै रथ दृढ़ भुजा आपगां चक्रु रस्रैः ॥४६॥

श्री मेद पाट क्षितिपः पुरस्ता दालोक्य शौटीर्य्यजुषः स्ववीरान्
प्रत्यर्थिसार्थप्रथिताभिमानप्रध्वंसलीलान मुमुदेऽति मात्रम् ॥४७॥

अथप्रचण्डपराक्रमो वैनतेयपारीन्द्रविक्रमो विनीतजनविनेता सभ्यजात्येकनेता सुविपुलं वैरायमाणकुलं निष्कलं कुर्वाणं वीरोचितगुणनिकरं बिभ्राणं लोकोत्तरशौर्य्यविडम्बिताखण्डलं निजयोधमण्डलं दर्शनामृतेन संभावयन् मानसिंहमानमर्दनं कर्त्तुकामः समन्तात्तदन्वेषणदृष्टिप्रेषणव्यापृतिमनोऽविरामः, यदा कृतबहुयत्नोऽपि तं साक्षात्कर्त्तुं नापारयत तदापुरो वर्त्तमानान् विरोधिसैनिकयातुधानानेव प्रष्टुमारब्धवान् सशुभ्रयशःप्रारब्धवान् ।

रेरेक्षुद्रा यवनतनयाः क्वास्तिमानः सधृष्टः,
संधत्ते योऽकबरनतितोजातिनाशंनिकृष्टः ।

ब्रूतक्षिप्रं मदसिभुजगी तीक्ष्णकोटिः कराला,
तेनक्षुण्णां क्षुधममिलषत्त्यद्य संजृम्भाणा ॥ ४८ ॥

दृप्ताः केचिच्छमनसदनं गन्तुकामाइवाथो,
मूर्खास्तस्याऽतुलबलनिधेः संमुखीनाः प्रहर्त्तुम् ।
यत्नं चक्रुः परमतिमदा हन्त सम्भूयभूय,
स्तेतत्प्रत्याक्रमणविकला मङ्क्षुतोर्वां वितेनुः ॥४९॥

विफलीकृतमायिकमायाः सुदृढ़भव्यकायाः संगरकर्मसंरतेः, क्षितिपतेस्तस्य युद्धकलाववोधा योधाः अपि सर्वलाशल्यशक्तित्रिशीर्षकनिस्त्रिंशकुन्तप्रभृतिप्रहरणै र्वैरायमाणान्निष्प्राणान्सम्पादयन्तः स्वीयाँश्चपरै युध्यमानान् समाश्वासयन्तः सन्तः शुशुभिरे । तत्समुत्पादितरक्ततोयगासु पतितानिद्विषां मुण्डानिकच्छपकुलानीव प्रतीयिरे, तथैव रुण्डखण्डान्यपि मकरमण्डलानीवचकासिरे चूर्णिताध्वजाश्च फेन-मालामनुचक्रुरिव ।

महावलाश्चाऽपि गजानशेकुस्तद्रक्तपङ्के व्यतिपातशङ्काः ।
गन्तुं तथातुङ्गतुरङ्गमाला: कुतो रथप्रस्थितिकल्पनास्यात् ॥५०॥

पृष्ठभागस्थितेनमानसिंहेन चातिवाहिता उत्साहिताश्चसुजवनाअपि यवना धैर्यमासाद्य भूयोऽपि महाराजसैन्यसंहारे प्रवृत्ताः ।

शस्त्रास्त्रजन्यव्रणराजिसंक्षरच्छोणारुणाङ्गा उभयेऽपि सैनिकाः ।
मनःशिलाविद्रुमनागसम्भवच्छायानुकारेपटवोवभूवुः ॥ ५१ ॥
रक्तं जहुः केचन चूर्णिताङ्गा केचिन्मुमूर्च्छु र्व्रणराजिराजः ।
खड्गाभवन्तः किलकेऽपि योधाः पेतुः पृथिव्यां विशफाइवागाः ॥५२
शैवालवृन्दमिवमत्तगजो नरेन्द्रः सोत्पाटयन् वैरिबलंबलीनः ।
आसाद्य मानमपकारपरं परं तं निर्भत्स्यचाह शठ तिष्ठसमागतोऽहम् ॥५३
शुण्डालशुण्डिकामूले महावेगोऽथ चेतकः ।
इङ्गितज्ञो न्यधात्पादौ भल्लेन प्राहरन्नृपः ॥ ५४ ॥
अम्बरवारीवारितभल्लः शात्रवगल्लभेदने मल्लः ।
अपिनाभैत्सीदयत्तद्भालं दैव मेव मन्येतत्पालम् ॥ ५५ ॥

प्रतापहेतेरपि लक्ष्यविच्युति र्जातेति माभूत्परिवादवादः ।
इतीशनिर्धार्यतदीयमल्लः स्थिरस्थितिंहस्तिपकं जघान ॥ ५६ ॥
मत्स्वामिनं भूमिपुरन्दरोऽयं मृत्यो र्मुखंदर्शयितुं समागात् ।
किंनेति विभ्यत्तरसैव नागः स्थानान्तरंतत्पुरतो निनाय ॥ ५७ ॥

तदानींम नसिंहोऽपि केसरिणोगौरिव विमुक्तःसातिशयभययुक्तस्ततः सुदूरंस्थान-मासाद्य किंचित्समाश्वसन्—

रणाद्द्रुतं जातु पुरःप्रहारा स्ताद्दक्षशूराः सुकृतावताराः ।
नोत्प्रोथयन्तीति विभाव्य चिन्तां त्यजनशशसाथकरीन्द्रवेगम् ॥ ५८ ॥
यातो रिपुर्हाननसंमुखीनो भूत्वाऽपि मेजीवित एवदुष्टः ।
आधोरणो हन्त हतोवराकः सोऽनार्य्यसेवाकृतिपापजुष्टः ॥ ५९ ॥
प्रतापसिंहः समये तदानीं कृतानुतापोऽजनि भूमिजानिः ।
कर्त्तव्यतन्त्रैः पुरुषैः स्वतन्त्रै किंकर्त्तुमिष्टा परतन्त्रहानिः ॥ ६० ॥

दृढसंगरः क्षत्रियधुरन्धरः सामर्षः सततसमाकलितशस्त्रास्त्रवर्षः शीघ्रमेतेतः प्रस्थाय तदाननसंमुखमभियाय कृताभिमानंमानसिंहाभिधानं श्रीपातसाहसैन्य प्रधानं निहत्यतथैवाऽन्यानपिमान्यान्सेनानीलोकान् नीरोकान् विदधानः समेधमानमानःनिः-शेषमपिनःसैन्यंदैन्यंयावत्प्रापयितुंनप्रभवति तावदेवसर्वै रपि संभूयाऽत्र समन्तात् प्राणपक्षिनिवाराः शस्त्रास्त्रप्रहाराःकर्त्तव्याः स्वस्वामिन उपकाराश्वभूतभाविनः स्मर्त्तव्या इतिहतावशिष्टाः सैन्यविशिष्टाः क्षिप्रमेव परितः समेत्य यथामन्त्रमेवतत्रव्यवहर्त्तुं प्रवृत्ताः सोऽपिधैर्य्यधनोमहाराजस्तैःशठैः सर्वैदिनं युध्यमानो महात्मा नैकव्रणाङ्कोऽपि धीरःसुवीरःप्रत्यर्थिनाशाय भूयःसमन्युवेगं दधे भारते वाभिमन्युः ।

ततःसमुद्दण्डप्रचण्डप्रत्यनीकानीकसंहार पारव्यापारसंलग्नं कल्पान्तरुद्रसंस्थं समीपस्थं तं विलोक्य महाकृतज्ञाः आयोधनविधानविज्ञाः अनेकेवीराः सहसाः सहसा तत्रागम्य राजानं प्रणम्यं प्रत्यर्थिप्रधर्षणं लोमहर्षणंस्वस्वामिचित्तापकर्षणं हस्तलाधव-प्रकर्षं सुधन्यं यन्यं जनयांबभूवुः ।

कटकटरवयुक्तं हेतिजालं क्षिपन्तः
प्रतिभटशठसंघं सर्वतो दारयन्तः ।

क्षितिपतिवरयोधाः प्रोन्मिषत्खड्गधाराः
प्रकटितगुरुवीर्या जन्यभूमौ विचेरुः ॥ ६१ ॥
प्रत्यालीढमथालीढं भावयद्भटमण्डलं ।
एकैकेनप्रहारेण रुण्डमुण्डद्वयं व्यधात् ॥ ६२ ॥
नृत्यत्कबन्धावलिरुण्डसंकुलं क्रव्यादरङ्कालिनिपीत जाङ्गलम् ।
अमङ्गलंतत्सुभटैस्तु मङ्गलं व्यज्ञापिजन्यंत्रिदिवायशम्बलम् ॥ ६३॥

अमितसंख्यत्वाद्रक्तवीजायमानान् म्लेच्छराजसैन्यप्रधानान्समापयन्तोऽपि तत्रभवन्तो विशालविक्रमवन्तो दिव्यशस्त्रास्त्रजालेनसमुल्लसन्तस्तन्मध्यपतिता अनेके रणकर्मकर्मठाः शत्रुसंकटाः, अपलङ्कटा भटा यदावीरगतिं प्रापुस्तदा केलावरबल्लभो विज्ञातमहाराजविपल्लवो झालामन्नानामा लोकोत्तरधामासभ्यजातिहीरैः स्ववीरैः समेत्य नितान्तपरिश्रान्तं मेदपाटभूमिकान्तं तं युक्त्यानिर्गमय्य तत्प्रतिहस्तकतां स्वीकृत्य सइवशत्रुवृन्दविध्वंसकर्मणि संलग्नोऽभवत् ।

अनुपमबलवामः स्वामिकल्याणकामः
चिरसमयमथासौ दिव्यशक्तिप्रकाशः ।
परमगुणनिवासः शत्रुजत्रुप्रणाशः
हरिरिवदितिपुत्रैः स्वर्गधाम प्रतस्थे ॥ ६४ ॥
भूपालः सप्रणतशरणं दारुणं विप्रयोगं
श्रुत्वा तस्य प्रविकलमना भक्तवात्सल्यमूर्तिः ।
अन्यान् वीरान् सुरपुरगतान् हन्तशोचन् नितान्तं
सायंकाले प्रधनविरतिं कारयामास योधान् ॥६५॥
म्लेच्छैर्मानः प्रमुदितमनाः स्तूयमानः समन्तात्
हाहन्ताहो विजयकमला लालितो मित्र वर्गैः ।
जातिद्रोही सुकृतविमुखः संमदं प्राप भूरि
देवे रुष्टे परतिहि निजः कस्यदोषोऽत्र देयः ॥६६॥
यःसंग्रामाद्द विकलितगति भीतचित्तो विद्रुत्य
प्राणत्राणं कथमपि विधे रानकूल्याद्द वितेने ।
सायंकाले समितिविरतौ मानसिंहः सएव
कस्माज्जातो विजयमुदितः कारणं तन्नजाने ॥६७॥

॥ इति षष्ठो निश्वासः ॥

# अथ सप्तमो निश्वासः

लीलामयस्य जगतां जननादिहेतोः केतोः श्रुते र्भगवतो भवसिन्धुसेतोः ।
ध्यायामि धाम भवितुं कविलोककल्पः शक्तिप्रतापसमितिप्रणयोरुजल्पः ॥१

अथतस्यां वैरायमाणव्रातविग्रहविग्रहनिग्रहसंलग्नतादशायाँहेत्याघातसंघातजर्जरितकलेवरः, प्रधनभुवि प्रमथितारातिनारीसुखोत्सवदेवरः, किंचिद्दलितललितविशालकन्धरः, पुरन्दरइवमहाधुरन्धरः, शुद्धतरविचित्रचरित्रः स उदयसिंहपुत्रः, स्वरितान् स्वदेशसेवारतान् स्वकर्त्तव्यबाधान् स्वीययोधान् निरन्तरं शोचन् विस्मृतस्वात्मव्रणावेदनो विचारधनो वृर्त्तमानमहायुद्धनिदानमसौ महास्वैरी वैरी शस्त्रभृतोऽपि ममसामी प्यमागतोऽपिजीवितएवनिर्गतः कृतस्वजात्यपमानः साभिमानः शत्रुसैन्यप्रधानो मान इति वारं वार मनुतपन्स्वल्पेतरव्रणराजिभाजं वाजिराजं विलक्षणलक्षणसम्पन्नधामानं चेतकनामानं महारयं हयं समधिरुह्य स्मृतदेवदेव एकाक्येवततः सुखदसमीरनीरं कुम्भलमीरं प्रतिप्रतस्थे ।

एकाकिनं नृपवरं परिचित्य यान्तं,
　　श्रातं रिपोः खलभटौ बततंमहान्तम् ।
हन्तुं ततः प्रचलितौ जवनाश्वसंस्थौ,
　　धिकतौ भविष्यति भविष्यदधोव्यवस्थौ ॥ २ ॥
अस्मिन् हते सति रिपौ यवनाधिनाथः,
　　सन्तुष्य किं न वितरेच्छ्रुतशत्रुमाथः ।
हिन्दूवधोत्थसुकृतं च महाफलाय,
　　किंनोभविष्यति भविष्यतिसत्सुखाय ॥ ३ ॥
एकाक्यसौ गमनदत्तमनाः कुदृष्टिः शस्त्रप्रहारविकलाखिलगात्रयष्टिः ।
पश्चात्प्रयाय विजने गहने नितान्तं, हत्वैनमद्यत नुमः प्रभुहृत्प्रशान्तम् ॥४॥
यन्निग्रहाय बहवोऽसुकरा उपायाः सम्पादिताः प्रभुवरेण सभूरिमायाः ।
सर्वेऽपि ते समभवन् शशश्रृङ्गकल्पाःकिंनाद्य तत्र वयमेव फलद्धिकल्पाः ॥५॥

मानादयोऽपि विधुकूर्चकचायमानाः,
संहर्त्तु मेत्य यत्नुपात्तमहापमानाः ।
जाता स्तमेव वय मद्य विनाऽपि हान्या,
हन्मो न किं स्वविषये समवीरमान्याः ॥ ६ ॥

इत्येवमादिकुधियौ पथिवाग्विलासं
गर्वान्वितौ विदधतौ स्फुटमन्दहासम् ।
यान्तौ विलोक्या मतिमान् नरदेवबन्धु
स्तन्मार्गगाम्यजनि शत्रुविपत्ति सिन्धुः ॥ ७ ॥

जीवोऽन्यथा चिन्तनमातनोति
स्वकाम्यकामो मुदितान्तरङ्गः ।
वैरीविधि स्तर्हि हहो क्षणेन
ततोऽन्यथैवाशु विधि र्विधत्ते ॥ ८ ॥

प्रतापइव महाप्रतापः सिंह इव विक्रमशीलः परवारणवारण शीलश्च सशक्ति सिंहः केनाऽपि कारणेन शत्रुभिरूपजायबलेन सर्वगुणश्रेष्ठेन ज्येष्ठेन सुनाभिनासनाभिना प्रतापसिहेन वाक्कलहं कारयित्वाततोविमुखीकृतः दुरदृष्टवशात् धार्मिकवरं-तंसहोदरंप्रकोप्य स्वपरित्यागदोषंचमुधैवतत्रारोप्यसभ्यजातिविद्वेषिणद्वेषिणंदुर्व्यसनेश्वरं यवनेश्वरं प्रतिपद्य कृतकृत्यमिवात्मानं मेने स्वपरिवारेणनभृशं वैरं वितेने। स तत्र संग्रामभूमिमागतोऽपि भ्रातृविरुद्धं युद्धं नराचयामास किन्तु दर्शकरूपणैव तत्र स्थिति मचकलत्। वैरिभिराक्रममाणं धर्मत्राणं वीरलोकधुरन्धरं भ्रातृवरं दृष्ट्वाविश्वासघातपातकभिया तत्कृते समर्थोऽपि स महाशूरः साहाय्यप्रदान कर्त्तुं नापारयत्प्रधनसमाप्तौचविरक्तिभाजितास्मिन्विराजिस्वराजधानीप्रतिएकाकिनिप्रस्थिते सति तत्पृष्ठत एव स्वयमपिततोनिर्गम्य चचालकरिष्यमाणतद्विरोधिकालः। गच्छता च तेन मूलत्राण खुराषाणवासिनौ प्रमदविकासनौ परहिंसामुख्यव्यापारौ कोचिदश्ववारौ महाराजमनुधावन्तौ दुर्भाववन्तो विलोकितौ तदनिष्टसंभावनतुष्टौ महापुष्टौ-अथकृतभ्रूकुटिविभङ्गसमुन्नामितोत्तमाङ्गः प्रकटितभ्रातृवात्सल्या दुहृद्धृदयशल्यो निर्भीकः परमपुष्ट-प्रतीकः सत्यपक्षपाती महाप्रतापी समायं तदभिप्रायं विज्ञायराद्यं शीघ्रं मनोज्ञरयं हयं धावयंस्तदनुपदमेव प्रपेदे मेदपाटराजवाजिराजोऽपि तमुद्वहमानः प्रभञ्जनेनसमानः

उद्घातिनीमपिभूमिं प्लुतगतिःसमतलामिव समुल्लङ्घयन् अगाधपाथःसम्पन्नं प्रत्यासन्नं कमपिनदविशेषं सङ्केषमेकेनोत्सवेनसंमुत्तीर्य्य सुनिरवद्यां पद्यामवलम्बितवान् । तौ-चाहितौयवनभटौसुकृतपलङ्कटौ यावत्पारेनदं गन्तुं संनद्धौ जातौ तावदेवतीक्ष्णाग्रभल्ल-करेण योधप्रवरेण वैरिवारणसिंहेन शक्तिसिंहेन विद्रुत्यसतिरस्कारंचाक्रुश्य प्रोक्तौ तौ निरागमौ यवनाधमौ किमरे परिभ्रान्तमश्वमध्यासीनंसंप्रतियुयुत्साहीनं तमेकाकिनं पृष्ठतो गत्वा हन्तुकामौ युवांसुवामौ, अत्रायातौ महोत्पातौ, कुतस्त्येयं वीरतापठितः पाठतासुहृद्भ्यांभवद्भ्याम्–हताशौ यवन पाशौ संप्रतिविजिगीषापरम्दुःखं स्ववासोन्मु-खं करुणैकसिन्धुं सुकृतरक्षणक्षणप्रयत्नं मानवरत्नंसंमुखागतसमुद्दण्डवैतण्डिकप्राण हरं मेभ्रातरं हत्वामृषैव सफलमनोरथौ भवितुं समागमतं युवाम् ।

कथंवांकार्य्यसंसिद्धिः शस्त्रयाणौ मयि स्थिते ।
सूर्य्यालोकेऽपि किंलोक व्याप्नुयान्निविडं तमः ॥९॥

कालप्रेरि तौ विघूर्णितकन्धरौ निशितहेतिसंयुक्तकरौ तदीयं तथाविधं कर्कशं वचो निशम्य रोषकषायितलोचनं तं प्रत्यूचतुः किमरे वाचाल ? हिन्दूराजकबाल ? पादशाहपादनिघ्न ? महाकृतघ्न ? किंमर्थं व्यर्थं त्वमिहाऽस्मत्कर्म्मणि परिणावहुश-र्मणि विघ्नीभवितुमागाः यदि मध्येरणं सहोदरसहायताकरणं तवाभिप्रेतं तर्हि संग्रा-माङ्गण एवत्वयास्य हतबलसारपक्षःकुतोनसमर्थितः यदाऽयं ततोमृतसैन्यः प्रादुर्भवद्दै-न्यः पलायितःतदात्वमपि अश्रुकणप्रोञ्छनकामनयेव समाश्वासमितुमत्रागमः । मन्या महे त्वां रक्षताऽस्मत्स्वामिना श्रितकल्याणकामिना भुजङ्गंप्रतिदुग्धं पायितम् । प्रदीप्तख-दिरकोकिलं वा कक्षेनिधाय अभिमारुतंशयितम् । रेरेस्वाम्यनिष्टकामिन् दुर्जनाग्र-गामिन् धिक्त्वामज्ञंमकृतज्ञम् । योऽत्रभवता महामहिमभृता दत्तनिराश्रयवृत्तिना चक्रवर्त्तिना सुतानिर्विशेषं संरक्षितः, नानाविधाचितव्यापारेषु च शिक्षितः, तस्यैवाऽद्य कार्य्यसिद्धौ प्रत्यूहव्यूहरूपेणपरिणतः । अरे धृष्टप्रतिष्ठ मनाकूतिष्ठ लप्स्य से त्वमेव पूर्वमपूर्वमविनयस्याऽस्याऽविकलं फलम् ।

श्रुत्वातदीयवचनं वचनीयरूपं भूपानुजो दृढभुजोऽथ मृगेन्द्रसारः ।
कोपाकुलः श्रमजलाचितगात्रयष्टिः प्रोवाच भालफलिनभ्रुकुटीविभङ्गः ॥१०॥
येनाधमेन परिवञ्च्य भवन्नृपेण स्वार्थोपपत्तिकृतये स्ववशीकृतोऽहम् ।
पूर्वं पुन र्ममसहोदरनाशनाय यत्नो व्यधायि किमु तस्य परंहिकर्म ॥११॥

विश्वासभूमि मधिरोप्य भटा अनेके यैर्दुर्जनै निर्जचमूस्थितिशालिनोऽपि ।
हिन्दूधियैव निहतावततादृशानाँ पक्षस्थितोऽपिपुरुषःकुशलीकथंस्यात् ॥१२॥

संग्राम समयेच—

विश्वासघातदुरितं नमयि प्रसज्ये, दित्येवकारणमभून्ममकोपिनोऽपि ।
युष्मद्विनाशनसमुत्सकताविरोधि, धर्म्मप्रियोहिभुवनेननु सभ्यलोकः ॥१३

मृत्योमुखे पतितुमत्र समागतौ रे,
पापाशयौ ममसहोदरनाशकामौ ।
सञ्जीभवेत मतिमङ्क्षु मयाप्रयोद्धुम्,
पश्यामिवां रणकलां कृतमुक्तियुक्तया ॥१४॥

इत्यभिधायनिशितकोटिभल्लमादायसत्वेकेनैवतत्प्रहारेणमहाभिमानिनं खुरासा-निनं निहत्य तदितरविसृष्टलास्त्रायुधं प्रत्यालीढगत्याविफलीकृत्य किंचिदिवपृष्ठतो-निवृत्य द्वितीयभल्लमतल्लजप्रहारेणतमपिशिरसिविच्छिद्य भूमितलशायिनं विदधे ।

किंविचार्य्यसमायातौ हर्षगर्वितमानसौ ।
क्रव्यादभोजनीभूतौतौकृतौहन्तभूभुजा ॥१५॥

अथतदीयां हेतितर्तिं स्वायत्तीकृत्य तरुकाण्डप्रकाण्डसंयततदश्वः विशुद्धपार्श्वः समहाराणानुजः सुदृढविशालभुजः शूरजनप्रेष्ठंज्येष्ठं सहोदरं विश्रब्धप्रस्थानपरं समुद्दिश्य अधितुङ्गतुरङ्गपृष्ठमुपविश्य सवेगमनुद्रुत्य दूरादेवतारस्वरेण तमाकारयामास महाप्राणस्यतस्यतदनुजस्यहूतिरवो विविधचिन्तासन्तानप्रसक्तमपि तदन्तरङ्गं कर्णद्वारं प्रविश्य सपद्येववल्गयेवाचकर्ष ।

विमनाःसोऽपिमहामनाः अविकुण्ठंसनाभिकण्ठं परिचित्यकिंचितपरावृत्तकन्धरः सुबहुविशयधरबन्धुरः, विशालाभ्यांलोचनाभ्यांप्रत्यासीदन्तंविषीदन्तंतंविलोक्यतत्रै-वतस्थौ ।

कथमयं विपक्षपक्षधरः शक्तिसिंहोऽपि मे सहोदरः सांप्रतंवैरशोधनाय मन्नि-धनाय सुनिर्भयममुमेवसमयमुचितंप्रतीत्यसामभ्येति सहेति रिति, यद्ययंमद्राज्यमुप-भोक्तुकामः सपत्नसमाश्रमविश्रामः तत्प्रहितःस्वार्थसिद्धिसमाहितः प्रविकलविग्रहं सुविग्रहं मां मत्वा कृतकृत्यो भवितुमिच्छति तर्हि किमत्रमयाप्रतिविधेयमिति यद्वा-

यद्भावितद्भवतु द्रक्ष्यामि तावदेनमपीति चेतसि निर्धार्य्य धीरस्वभावः समहानुभावः स्वस्मात्तुरङ्गमात्तरसा दवतीर्य्यसमेहीतिवचः समुदीर्य्यतंप्रतिपालयामास ।

सोऽपि ततः किंचिद्दूरे निजाश्वंक्वचनस्थाणुके निबध्य पद्भ्यामेवरिक्तपाणिस्तमभिवादयितुं दीनइवम्लानवदनस्तदाननसंमुखीनःप्रचचाल पाणिपल्लवसंपुटसंवलितविशालभालः ।

ततोविनयसम्पन्नं प्रत्यासन्नं—

वाष्पनीरपरिषिक्तकपोलं, स्खलितगतिंरुधिराचितचोलम् ।
तंविचार्य्यसूनु नृपवर्य्यः, सुप्रतिभोविहितार्य्यसपर्य्यः ॥ १६ ॥
नायं मयि दुर्भावपरीतः, समागतो वा द्वेषणधीतः ।
इत्येवं निश्चित्य नरेशः, सोऽभून्निश्चिन्तः प्रणतेशः ॥ १७ ॥

अथन्यस्तसमस्तहेतिजालः साञ्जलिपुटविभ्राजमानभालः सहसैवसोत्कण्ठं तदुपकण्ठं समेत्य चरणयोर्निपत्य तं प्रणिपत्य स्वापराधान् अगाधान् क्षमापयितुं गद्गदाक्षरं भ्रातृप्रवरं प्रार्थयामास । ततोविगतसन्देहः समुद्भूतसनाभिस्नेहः प्रकृतिपेशलो भक्तवत्सलोमहाराजस्तं शिरस्याघ्राय शुभाशीर्वादपुरःसरं करपल्लवाभ्यां निजाभ्यांसस्व१जयोर्भुजयोःपरिगृह्योत्थाप्य व्याजहार वत्सदुरदृष्टवशाद् दुर्जनसम्पर्कप्रसंगाद्वा यदपि त्वयामद्विषयेऽत्याहितं विहितं तत्तावकीनां दम्भविहीनां सभक्ति विनम्रोक्तिं समाकर्णयनविच्छायं च तेमुखमण्डलं निर्वर्णयन् विस्मृत्य सातिहर्षप्रकटितसौजन्यगुणप्रकर्षं त्वामनुगृह्णामि, यत्त्वमिदानींस्वकुलजातिहानिं निरीक्ष्य विपत्तिमयेऽत्र समयेसदुदारतासमेतोमामभ्युपेतोऽसितत्प्रेष्ठ कथंकारं सहसासद्भावमुपेत्य धृतपक्षं विपक्षंचपरिहाय मामन्वागाः कथं चत्वदीयानि वासांसि शोणशोणितकणव्याप्तानिप्रतीयन्ते किं क्वचिद् विक्रान्तं विक्रमवताऽऽयुष्मता किंवा निर्सर्ग्यादैर्म्लेच्छदायादैः स्तैर्मत्सम्बन्धकारणाद् भविष्यदापत्तिसम्भावनयात्वय्यपिदुश्चरितमाचरितं ।

येतत्त्वशोधप्रतिकूलबुद्धयः, स्वजातिभिन्नासुहृदोऽपिदुर्हृदः ।
सम्भावयन्तेचपलस्वभावाः, किंकिंनतेकर्त्तुमलंयतेरन् ॥ १८ ॥
स्वलाभहेतोर्यदिमित्रताकृता, नसावसाने सुखदा व्यवस्थिता ।
सद्भावनावारिसमुक्षितो मुहुः फलायकल्पेतसुहृत्त्वपादपः ॥ १९ ॥

१ स्वजः प्रस्वेदपुत्रयोरितिमेदिनी ।

तत्सौम्यविस्पष्टमुदीर्य्यतां त्वया स्ववृत्तजातं सहसाप्रजातम् ।
चेतःपरिज्ञातुमुपैति कौतुकं, नैवागतंतेव्यपयातहेतुकम् ॥ २० ॥
शृणु देवमनस्तेऽदः श्रोतुमुत्कण्ठितं यतः ।
अनिच्छन्नपि तद्वच्मि भवदाज्ञावशंवदः ॥ २२ ॥

अपिभानुकुलावतंस वीरवरगोष्ठीजेगीयनप्रशंस परिणतिरम्यफलसंयोगाद्दैव-योगाद् अहमपि संग्रामदिदृक्षया मानादिभिर्भवत्प्रतिवादिभिःसहसंगम्यसंग्रामभुविता-टस्थ्यमवलम्ब्यस्थितिमकार्षम् । तत्र च स्वदेशजातिरक्षणकृते नानाविधायोधनधरै र्गुणैरवरैः परैःप्रतियुध्यमानानां तत्संहारकर्म्मणिदत्तावधानानां तदाक्रमणप्रवृत्तिनिवृत्ति सिद्धहस्तानां महाप्रशस्तानां विशालभुजानांबाहुजानां लोकोत्तररोमाञ्चकरं लसत्क्रमं पराक्रमं विलोक्य वैलक्ष्यलक्ष्यहृदयः संजातानुतापोदयःशकुनिरिव श्येनसंपातभीत श्रितनीडः सव्रीडः कथमपिधर्मभीरुरहं चेतोनिरुध्या चिरमात्मानं पर्य्यवस्थापयितुम पारयम् यदाचतत्र—

ग्वालीयरीयनृपतिःसुकृतैकमूर्तिः
श्रीरामसिंहपदवाच्य उदारकीर्तिः ।
पुत्रे हतेऽपि धृतिमान् कुलतन्तुभूते
कर्त्तव्यपालनविधे र्न मनाग् व्यरंसीत् ॥ २३ ॥

तथैवाऽन्येऽपि दिव्यशक्तिसम्पन्नाः क्षत्रियवर्यकुलोत्पन्नाः प्राणेष्वपिव्यक्तीकृत-महाविरागाः, शूरमहाभागाः, सान्द्रष्टिकोदर्कदृष्टयःशात्रववनलावनप्रवणरिष्टयः सु-कृतिनः कृतिनः सुजन्या राजन्याः यवनसैन्यं दैन्यं प्रापयन्तः संग्रामयागे स्वात्मानं समानं आहुतीकृत्य देवालयं प्रत्यगमन, तदाधिक्कृतोमया महापाप्मान्तरात्मा । चिन्तितंचकोऽन्योऽन्योमत्तोऽपिमत्तोभुविभविष्यति यःसुस्थोऽपि जातिद्रोहियवन-पक्षसंस्थोनालंस्वदेशजातिगौरवरक्षिणः स्वार्थान्धजनविपक्षिणः सुकृतशुभ्रयशसां-निर्मातुःस्वभ्रातुः सहायतासम्पादनेऽद्य दिने । एतेकिराता एवधन्या विक्रमरसैर्यैरुत्प्रो-थिताअनेकेवैरिसैन्याः । येचसहर्षं स्वजन्मभुवः कल्याणार्थं संग्रामाङ्गणे पराक्रमं कुर्वाणाः स्वात्मानं कृतार्थयन्तिचसुतावतारस्य मत्सहोदरस्य उत्साहसम्पत्तिम् । ततः-परंमानसिंहं निहन्तुं यदाश्रीमता तत्र भवता लोकोत्तरेणाऽऽक्रमणेन समुद्युक्तं तेन च दैवगत्या प्राणै र्न वियुक्तम् तदास्वल्पेतरैः परैः संभूय सकृदेव तत्रभवति प्रहृतं हस्त-

लाघववताभवताचतत्प्रति विधाय तत्त्वयाय चतत्क्षणमेव यदाप्रवृत्तं तदवलोक्य विस्मृतपुरातनविरोधः प्रजातसहोदरकर्त्तव्यबोधः निर्ध्याततदीयवार्त्तः मोहमहाधिनार्त्तः स्वपक्षमवलम्ब्यरणकानने यवनमृगाऽऽखेटकरुचिंव्यधाम । परंक्रुतघ्नतादोषभयात्-कृच्छ्रादेव तत्परिवर्त्तनसामर्थ्यमधाम् ।

अहोऽत्याचारिभिः स्वमतदुराग्रहधारिभिः स्वपक्षस्थाअपिवैदिकधर्मास्थाः—

येकेऽपिसभ्यावतमानमत्या समागु रुद्दामबलाभिमत्या ।
तत्राऽपि केचिद्ध विपरीतधीभिर्यत्संहृतास्तद्धृहृदयं दुनोति ॥ २४ ॥
आलोक्य तेषांबहुशः परेषां विश्वासघातादिकदोषजातम् ।
नातः परंसंस्थिति रत्र कार्य्या कल्याणलाभाय मयेतिबुद्धम् ॥ २५ ॥

संग्रामावसानेचयदाश्रीमानविरक्तइव केवलएव ततःप्रचलितः तदैवाहमपि भवच्चरणारविन्दोपस्थानाय ततःप्रस्थाय भवदनुपदेव प्राचालिषम् । मदग्रतएवकौचिदा-ततायिनौ महामायिनौ सदाविरोधितसभ्यौ खुराषाणमूलत्राणवास्तव्यौ परपीडनव्यसन-यापितयामौ देवचरणानिष्टकामौ दृष्ट्यामल्लोचनगोचरतां गतौ दुरभिमानभृतौ, तौ मध्येमार्गं नदपरिसरे भवत्कृपाप्रभावेण निहत्यागच्छाभि तत्तदङ्गनिःसृतशोणित शोणकणाबलिर्यत्र तत्र पटपटले पतिता प्रतीयते ।

अथ भूवल्लभः प्रलम्बभुजस्य तस्यनिजानुस्य विक्रमविशिष्ट भ्रातृस्नेहजुष्ट-शौर्य्यादिगुणान्तं तद्वृत्तान्तं नितान्तं निपीयस्वान्ते प्रमोदभरं बभार ।

प्राहचमज्ज्येष्ठ प्रेष्ठ दैव प्रतिकूलतयाऽद्यावधि निष्कारणमेवसौहार्दकारणमाव-योर्द्वयोंरस्वैरंवैरंसमजनि । यतः स्वदेशस्याऽपि परप्रवेशस्याऽस्य महाशोचनीया दशा समपद्यत । फलितंचविरोधि जनाभिलाषतरुणा । अतः परंभवानपि स्वदेशरक्षायै-निश्चिन्तीभूयसन्नद्धोभवेत्—

संपालनाय साधूनां विनाशायचदुर्हृदाम् ।
जनिर्भवति वीराणां क्षत्रियाणांभुवस्तले ॥ २६ ॥
त्वयिवत्ससमायाते प्रसन्नं मेऽद्य मानसम् ।
भ्रातृस्नेहरसास्वादः किं न्वपीयूषसन्निभः ॥ २७ ॥

यदांतौसुवृत्तौपरस्परालापसुखमनुभवितुं प्रवृत्तौ हन्ततदैव तत्प्रेमरस विरसय-न्निव महाविकरालः कालःसंग्रामग्रामसंजातापातायुतं प्राणैर्वियुतं चकारस्वामिप्रणय-

पेटकंतंचेटकम् सहसैव भुविपतन्तं नीलप्रभावन्तं बहुधाकृतात्मत्राणं विप्राणं तं विलोक्य धैर्य्यगुणशाल्यपि महाराजस्तदुपकारितां स्मारं स्मारंतत्कृतेशोकोच्छ्वासगद्गदिकाऽवरुद्धनिगालं स्वेदबिन्दुविसरनिचितभालं विडम्बितसच्छिन्नसूत्रगलन्मौक्तिकमालं समुदितवराजस्रास्रजालं मुञ्चन् शुशोच। भ्रातृप्रबोधतश्च यथाकथमपितद्वियोगजन्यं दुखं मुमोच।

यत्रवसुन्धरायांस पञ्चत्वमाप तत्रैवातिसत्वरं तन्नाम्नाचत्वरं तत्स्मारकभूत कारितवान् सकृतज्ञतागुणवान अद्याऽपि तत्रप्रतिवर्षं सातिहर्षं तत्रत्याः सुरस्तुत्याः सभुजिष्या मनुष्याः सोत्सवं महोत्सवं मानयन्ति।

भ्रातुराज्ञां समासाद्य शक्तिसिंहो महामनाः।
पुनरागमनं धीरः प्रतिश्रुत्यागमत्ततः ॥ २८ ॥
शिवास्ते सन्तु पन्थानः प्रयाहि प्रेष्ठसांप्रतम्।
क्षिप्रं ततः समागम्य तोषयेर्बन्धुमानसम् ॥ २९ ॥
इत्यादिश्यमहाराजः स्वानुजं वीरपुङ्गवम्।
तस्यघोटकमारूह्य प्रपेदे वासमन्दिरम् ॥ ३० ॥

अथभूभुजाऽनुजो यदा ततोऽग्याघुत्य यवनसेनासन्निवेशं प्राप्तस्तदाऽन्याश्वसादिनं सत्यवादिनं तं दृष्ट्वातत्रत्याः सैनिकपुरुषाः पृष्टवन्तः शङ्कावन्तःकाऽगाद्भवान् कुत्र च परित्यक्तः सोऽधिबलयुक्तः सल्लक्षणोबहुविलक्षणो निजोवाजिराजः खुरासानिस्वामिकश्चाऽयंबन्धुराङ्गस्तुरङ्गःकुतःसमासादितइति। अथमेदपाटभूपालसहोदरो यथावृत्तंतद्वृत्तंसलीमाभिधस्यतत्सेनाध्यक्षस्य पुरतोऽपिवर्णयामास। ततोविदितचरतत्सनाभिपक्षः ससेनाध्यक्षः स्फुटापराधेऽपितस्मिन्निग्रहादिदण्डापेक्षया निष्कालनमेव समुचितंदण्डं प्रायुङ्क्त। सोऽपि समुन्नतकन्धरः शौटीर्य्यशालिप्रवरः प्रसन्नवदनः सपरिजनः तत्रभवन्तं भगवन्तं सविजयं मृत्युञ्जयं चेतसि भावयन् सम्बन्धिजनदर्शनलालसमानस स्ततः स्वराजधानीं प्रति प्रतस्थे।

तस्मिन्गतेवीरवरे भटानां मितस्ततोदन्तकथा बभूवुः।
महापराधोऽपि कथं सजाल्मः संप्रेषितो हुं बलनायकेन ॥ ३१ ॥
कण्डूयताऽथो निजकूर्चजालं केनाऽपि नाभ्यन्तरलम्बिबालम्।
अभाषि मित्रं प्रतिदुःखभाजा रुषाञ्जुषा मूढधियां विराजा ॥ ३२ ॥

सेनापतिर्दुर्मतिरेष मूढः पैगम्बरादेशवचो * विरूढः ।
यत्तेनदण्डेन विनैन हिन्दुः निष्कालितो मन्तुगणैकसिन्धुः ॥ ३३ ॥
सबुद्धिमान् नीतिरहस्यबोद्धा तं सान्त्वयन्नाह शनैः सुयोद्धा ।
किंकुप्यसित्वं मृदुशोमुनीकः सेनापतौ युक्तविधावभीकः ॥ ३४ ॥
संग्रामसिंहो रिपुकुम्भिनाशः प्रतापसिंहः स महाप्रकाशः ।
नाद्यानि केनाऽपिपुरःस्थितेन पश्चाद्गतं हन्त भटद्वयेन ॥ ३५ ॥
तं हन्तुमाराद्यदि चौरनीत्या कृतं बराक्या बत वीररीत्या ।
अनर्थचित्तौ बहुनीचवृत्तौ स्थाने हतौ तौ सुभटेन तेन ॥ ३६ ॥
ये क्षत्रियाः सन्तिमृगेन्द्रसाराः सैन्येऽस्मदोये प्रबल प्रहाराः ।
किं तान् नजानासि कथैकवीरः त्वंयत्प्रलापंकुरुषे नु धीरः ॥ ३७ ॥
स्थाने कृतं साधुधिया तदानो मयेसखेयन्नहिते न मानो ।
न्यग्राहि सेनापतिना बलीनः सदैवयः शौर्यविधानलीनः ॥ ३८ ॥
स्ववंशहानिं पुरतोऽपि दृष्ट्वा यः सत्यसन्धो न गतो विकारम् ।
किं तस्यवीरस्यविनिग्रहेण यशोविभूतीरवगच्छसि त्वम् ॥३९॥
अत्यल्पसंख्यैरऽपि नः प्रमुख्य यद्वंशजैः सैन्यसहस्रनाशः ।
कृतो रणे तस्य महाभटस्य केके पुरोयोद्धु मलं वदेर्नः ॥४०॥
येक्षत्रियास्तस्य समानशीलाः संबन्धिनो विक्रमगीतलीलाः ।
मित्राणि वा सन्ति विराजमानाः स्युस्तेकथं तत्सहितापमानाः ॥४१॥
इत्येव निश्चित्यनयज्ञवर्यः सेनापतिर्नोगुणवत्सपर्यः ।
विवासयँस्तंनिपुणप्रबन्धः सिद्धोऽद्य सिद्धानुमतौनवान्धः ॥४२॥
नातः परं मित्रकदाऽपि वाच्यं त्वयेतिभूयो विपयेऽत्रवाच्यम् ।
वदावदत्वं नहि शोभनीयं पुरोबुधांबालिश लोभनीयम् ॥४३॥
निशम्यतत्सोऽतिकृतानुतापः समीरि तेस्त्रे वचनीयलापः ।
विलज्जमानः सुहृदं जगाद विनीतिपूर्वंक्षततद्विषादः ॥४४॥

* निरूढोगर्हितेऽपिचेतिमेदिनी ।

अव चिद्वान्यं वचनं पयैश रहस्य विज्ञस्तु भवादृगेव ।
युक्तं त्वयोक्तं प्रतिभाधरेण प्रत्यग्र मां मित्र दयापरेण ॥४५॥
नातः परं जातु विचार मन्तरा वक्ष्ये वचो यत्कथितंतदन्तरा ।
सामर्थ्ययुक्ते सहसानकोऽपि अत्याचरेद्वा विषपाशयोऽपि ॥४६॥

अथप्रतापानुजः परित्यक्तम्लेच्छदनुजः सानन्दं मार्गमतिक्रामन् यत्रतत्रविश्राम-स्थानेविश्राम्यन् विचारयामास ।

रिक्तपाणि नगच्छेतराजानं श्रोत्रियं गुरुमितिवचनानुसारेणतदुचितंकिमप्युपायनं गृहीत्वैव मया गुरुरूपोभूपोऽद्य समधिगन्तव्यः, इतिविचारवतस्तस्यपरमसुभगे भैंस-रौरगढनामके दुर्गे प्रत्यर्थिलोकानिष्टवृष्टिः, दृष्टिरपप्तत् किमतः परंराजसन्तोषकरं वस्त्वन्तरं तदेतदेवबाहुबलेन विजित्य श्रीमते भूमिनेत्रे भ्रात्रे प्रदेयमिति निर्धार्य्य-श्येनावपातमवपत्य तद्रक्षणोत्कटान्भटान् प्रचण्डेनबाहुदण्डेन निहत्य स्वाधिपत्यंतत्र-प्रकटीचकार तद्व्यवस्थांचाकलय्ययथावसरंस्वराजधानींगत्वागुरुजनचरणारविन्दवन्द-नेनात्मानंकृतार्थयामास ।

नमन् गुरून् साञ्जलिनम्रभालः क्रमेण विज्ञो विनयोपलालः ।
तदाशिषां राशिमवाप्य मेने स्वःत्वान मानन्दनदीनमग्नम् ॥ ४७ ॥
दुर्गंचतत्स्वीयबलेन लब्धं प्रदेशनीकृत्यददा वुदारः ।
सनाभये भूमिभृतेऽथ सोऽपि प्रत्यर्पयत्माभृतरूपतोऽस्मै ॥ ४८ ॥
साराजधानी किलचित्ररूपा जज्ञे तदामङ्गलदृत्तभूपा ।
समस्तलोका मुद मादधानाः शोभां परां प्रापु रुदात्तमानाः ॥ ४९ ॥
लोकोत्तराकारविचित्रवीर्य्यौ तौ संगतौ हन्त सुतौविलोक्य ।
श्रीराजमाता मुदितान्तरङ्गा ददेद्विजेभ्योऽभिमतप्रदानम् ॥ ५० ॥

प्रभञ्जनसंपर्केणधनञ्जयइव चन्द्रोदयेन समुद्र इवशरदागमेन चण्डभानुरिव प्रतापसिंहोऽपि शक्तिसिंहसमागमनेन नितरामुल्ललास । कतिपयमासानन्तरंमहाराजानुजः सौजन्यसन्तोषितसकलकुलमनुजः सशक्तिसिंहोगुरुलोकानुज्ञातःकदाचित्प्रातःस्व-दुर्गंसमातृवर्गःप्रस्थितः, सचमहाराजमहाभागःस्वजन्मभूमिश्रेयोऽनुरागः, दुर्मित्राऽमितोत्पातव्रातशङ्कयासैन्यसंग्रहंचक्रे ।

इतिप्रतापचम्पूकाव्येभ्रातृसंमेलनपरः

॥ सप्तमोनिश्वासः ॥

# अथ अष्टमो निश्वासः

तिमिरनिकरनाशप्राप्तपर्य्याप्ततेजाः सकलगुणनिधानं निर्गुणोयोमहौजाः ।
प्रणतकुशलदक्षो दक्षमानापनोदी विबुधविदितधामा नम्यतामुक्षमोदी ॥१॥

दिल्लीपतिःसमिति सैन्यजनप्रधानान् सामन्तसार्थपुरतो ललिताभिमानान् ।
आहूयकूटनयतन्त्रवितन्द्रवित्तः प्राहाथ हा न विजितः सरिपुः प्रमत्तः ॥२॥

एकोऽपि हन्त बहुभिः सरिपुर्वराकः शूरै रहो बलिभि रूनबलप्रजाकः ।
यन्नाधुनाऽपि विनिगृह्य ममोपकण्ठ मानायि तेन विलपाम्यवसन्नकण्ठम् ॥३॥

रात्रिंदिवं बलिवरा वत चिन्तयामे निद्राऽपि नो भवतिलोचनसंमुखीना ।
विस्मृत्य यत्तदपमानजदुःखजातं किंचित्तु सौख्यमुपभोक्तुमलंभवेयम् ॥४॥

येकेऽपि वो भुजबलेन जिताध्रियन्ते भूपा न तेऽपि मनसा वतमाद्रियन्ते ।
तद्यामि मे प्रियभटा बहुशोनुतापं कःसत्करोति पुरुषं विगतप्रतापम् ॥५॥

भूयोऽपिनिग्रहकृते निपुणं भवन्तः सज्जीभवन्तु तरसा बहुयत्नवन्तः ।
आवश्यकं च सकलं ननु वस्तु जात मादाय शीघ्र मयि शूरवराः प्रयात ॥६॥

उत्पातिनो यदिभवेन्नगते निरोधः क्षिप्रं भवेत्सच परो न पुनःसुरोधः ।
इत्येव भो भटवराः सुदृढोविचारः सन्तिष्ठते मनसि मे समयावतारः ॥७॥

संप्रतिमाघमासिसर्वथाऽपि विजयप्रस्थानं शुभसंस्थानं प्रतिभाति यतः—

कालोऽयमस्ति ननु युद्धकृते वरीयान शीतातपादिकदरः सुहरोगरीयान् ।
जित्वैवतंदुरभिमानभृतसभृत्य मायान्तुमे सविभ्रमाशुततोनिवृत्य ॥८॥

स्वीकृत्य तस्य वचनं वचनीयकृत्याः
कृत्याकुलीकरणदक्षमनोऽनुसृत्याः ।
हिंसारसाःपररसाभिभवायसज्जाः
पज्जा व शास्त्ररहिताःस्मभवन्त्यलज्जाः ॥९॥

ततः सेनाध्यक्षाः कृतविभुनिदेशाः किल समे

हृदित्रस्यन्तोऽपि प्रबलबलभाजो नरपतेः ।

ससैन्याः प्रस्थानं व्यधुरभिरिपुप्रान्तमघृणाः

जनाः किं किं वा नो विदधति कुकृत्यं परवशाः ॥१०॥

भूमीश्वरोऽपि रिपुसैन्यमथो महेच्छः

संग्रामभूमिविततं जनिभूहितेच्छः ।

आकर्ण्यमन्युभरसंभरितान्तरक्षः

प्रत्याक्रमाय समगाद् धृतसत्यपक्षः ॥११॥

एकत्र तूनगणना नृपवीरभद्राः

सैन्ये परत्रयवना गणनादरिद्राः ।

मृत्योर्भटाअपिपरेषुनहिप्रयाताः

सर्वस्यसंघविषये ननुपक्षपाताः ॥१२॥

प्रवृत्तेशस्त्रसंपाते चारणोवीरबोधनः

कश्चित्तत्र समागम्य शूरानाह यशोधनः ॥१३॥

क्षत्रियाःसुवते पुत्रान्यदर्थंवीरपुङ्गवाः ।

आगतस्तस्यकालोऽयं दैवतश्चारुवाहवः ॥१४॥

यशःपुण्यफलप्राप्तेः साधनं सर्वथोचितम् ।

शास्त्रकारैः समाख्यातंक्षत्रियाणां कृते हितम् ॥१५॥

बाहुजारणयागेऽत्र भंगुराङ्गाल्पहव्यतः ।

सन्तोष्य देवताः सर्वास्तद्भोगानपि भुञ्जते ॥१६॥

तरन्ति पितरस्तेषां महारौरवगा अपि ।

येरणेदुष्टसंहारं कुर्वाणा निहतेदिवम् ॥१७॥

इत्येवंप्रतिबोधिताभटवराः सोत्साहमग्रस्थितान्

म्लेच्छक्षोणिपतेर्मदोन्नतमदान् हिंसारसान् हिंसितुम् ।

वीरास्ताँस्तरसा प्रहारकुशला उद्योगमाधुस्तराम् ।
प्रत्याक्रम्य च तेऽपि मन्युभरिता स्तान् हन्तुमारेभिरे ॥१८॥

अथ वैरिधैर्य्यमेघसमीरः कश्चित्क्षत्रियवीरः, इतस्ततोऽश्वं नर्तयन्तं प्रत्यासन्नप्रतिभटसंकटान् बाहुजभटान् दुरुक्तिप्रयुक्तिद्वारा संतर्जयन्तं मुहुर्मुहुश्च निजशक्तिप्रगानं कलयन्तं कमपि स्मयवन्तं विधित्स्यमानजन्यं यवनसैन्यं सिंहनादं निजगाद । कथमरे महामद यवनापसद त्वमस्मत्पुरतोऽपि मुमूर्षुरिव कटुकवचनान् निर्भयं परिभ्रमसि । तद्यदि जिजीविषुरसि तर्हि मद्वचोऽनुसर त्वरयैवेतोपसर नोचेदेकेनैव कुन्तप्रहारेण तावकीनं शिरो भुवि निपत्य कन्दुकलीलां विडम्बयिष्यति—अथ सोऽपि महाकोपी स्वायुधः मुद्यम्य तन्मुखाभिमुखमागम्य तमुवाच किमरे महावाचाल हिन्दुकवाल जाल्मरक्तपिपासासक्तिरियं मे शक्तिरादौ त्वामेव व्यापाद्य कोष्णं च ते रक्तमास्वाद्य स्वाभिधासार्थक्यकरणेऽत्ररणे सातिशयमहिमानं प्रतिमानं समेष्यतीति मन्ये यत्त्वं लोकोत्तरविक्रमभाजः, सम्राजस्तस्याऽपि हिन्दूविध्वंसबद्धकक्षं सेनाध्यक्षं मां प्रत्यपि संप्रत्यसम्बद्धप्रलापकलापमातन्वन् शौर्य्यकथामोदकैरेव मनोमोदयितुं प्रवृत्तः । अस्माभिः सह संग्रामाभिलाषोऽपि वः खपुष्पमालायते । तद्यदि चिरं जिजीविषुरसि तर्हि रे शठ मत्पुरतो मा मठ नमन्यसे चेदयं नभवसीति तदुपरि स्फटिरेव शस्त्रं चालयामास जहास च स्वान्ते नूनमेष संस्थास्यतीति—अथ पराक्रमधनः सोऽपि सुवदनः समहासारं तत्प्रहारं गतिविशेषेण विफलीकृत्य त्वमपि सावधानो भव नातः परं क्षणमात्रमपि प्राणान् धारयितुं प्रभवसीति तं सुचेतीकृत्य किंचिदिव परावृत्य निशितप्रायया भल्लधारया बन्धुरायां कन्धरायां विच्छिद्य वसुन्धरायां शाययामास ॥

अथ जानुभुजः शक्तिसिंहात्मजः करीन्द्रघटायां पारीन्द्र इव मृगकदम्बके ईहामृग इव विहगकुले श्येन इव परेषां तेषां सेनायां सेनायां निर्भयं विक्रामन् सर्वतश्च तत्रत्यभटावलेपपङ्कं तद्रक्तधारासारैरेव समार्ज गर्ज च

यकोऽपि भो म्लेच्छभटाः पलङ्कटो युष्मासु युद्धाय मयाभिवाञ्छति ।
आगत्य तेनाऽत्र विशङ्कचेतसा संग्रामयोग्या सफला विधीयताम् ॥१९॥

इत्येवमाद्य भटलोकमान्यः संग्रामभूमौ सफलप्रहारः ।
आभाषमाणो हरिविक्रमोऽसौ प्रावाहयद्रक्तसमुद्रयोषाः ॥२०॥

तत्र च प्रत्यर्थिभटानां मुण्डैः कच्छपायितं रुण्डखण्डैश्च मकरायितं कृत्तकीर्णैः प्रचण्डशुण्डालशुण्डादण्डैश्च भुजङ्गायितं इतस्ततः पतिताभिः प्रविततताभिः पताकाभिः

फेनायितं सुविशालैः श्मश्रुकूर्चजालैश्च शैवलायितं ततःस्वदेशानुरक्तैराजभक्तैः परम-कुलीनैः सांयुगीनैः शात्रवमण्डलसंकटैस्तस्य भटैः रद्धततरं वैरिप्रतापनिर्वाणकरं सदाक्रमं पराक्रमं निपीयनितरां प्रसेदे। विततयाऽहमहमिकयाच तद्धतावशिष्टान् अशिष्टप्रष्ठान् दुरन्तान् प्रतिपक्षान् समाक्रम्य तथैवसंहर्तुमारब्धवन्तस्तेऽपिविरेजिरे परेऽपिपरिशी-लितायोधनकला महामांसला विपुलांसामुद्गलवंशाः कालचोदिताइव स्वनायकानु-मोदिता स्तदस्त्रवन्हौपतङ्गीभवितुं भूयोभूयस्तत्पुर एवप्रत्याक्रम माबबन्धुः। ततस्ते समक्षाः तद्धेतिकोटिज्वालादग्धपक्षा देवभूयंगता अपि शमनभटप्रदीयमानातिमानवेद-नावेदनां प्रकटयांबभूवुः।

अल्लाहोऽकब्बररवकाराः क्रोधयुजः प्रतिवलबलवाराः।
अन्ये ततः समेत्यमहान्तः सञ्ज्यभवनयोद्धुं बहुभान्तः ॥२१॥

अथधनुर्वेदान्तर्वाणयःशस्त्रास्त्रपाणयःसदाप्रत्यादिष्टशठाः संग्रामकर्मठाः क्षिति-पतियोधा वैरिव्यतीपात निरोधास्तान् प्रत्याक्रमन्तः समितिकाननेगजमाचला इव निर्भयतया विचरन्तः स्वायोधनप्रयोगयोग्ययोग्यां सफलयन्तः सत्यव्रतपरिवृढपराक्रम-वित्तं चित्तं च प्रहर्षयन्तः प्रत्यर्थि व्रात प्रहित हेतिततिंहस्तलाघवेनव्यर्थयन्तस्तांश्च-यथावसरंनिशिताग्रैः शस्त्रास्त्रैः खण्डयन्तः सिंहगर्जनैर्दिग्गजानपि संत्रासयामासुरिव यवनसेनाध्यक्षाश्च विदितस्वनिर्बलपक्षाः विहितानेकप्रशस्तजन्यान् अन्यान् महाक्रू-रान् शूरान् सज्जीकृत्य अद्भुतसङ्ग्रामचर्य्यैः क्षत्रियवीरवर्य्यैः निहन्यमानानां स्वसैन्यज-नानां रक्षार्थंप्राहिण्वन्-तेचवीतदैन्या म्लेच्छसैन्या कीनाशकिंकरप्रख्याः स्वल्पेतर-संख्याः परैर्युध्यमानान् स्वगौरवरक्षणसावधानान् सुधीरान् क्षत्रियवीरान् समन्ता दाक्रम्य नानाविध प्रहारैर्वीरगतिं प्रापयितुं स्वन्यायशून्यतां च प्रख्यापयितुं प्रभवो-बभूवुः। ततोधैर्य्यगुणमण्डितो रणपण्डितो मेदपाटेश्वरः विद्विषां तेषां धर्मविरुद्धं युद्धं विलोक्य कोपपरीतमानसः तत्प्रतीकारलालसः शीघ्रमेव विरोधिलोकान् सशो-कान् विधाय संग्रामरसान् स्वान् चन्द्रगालस्थान् सपत्नभटरक्तधारा भिरेव तर्पया-मासेव।

शक्तिसिंहोऽपि शक्तात्मा प्रतापोव महाबलः।
वैरिसैन्यं महादैन्यं प्रापयामास सत्वरम् ॥२२॥

लोकोत्तरां तस्यमहाभुजस्य विलोक्य संग्रामकलां विपक्षाः।
भीताःसमन्ताद्बलशालिनोऽपि पलायनोद्योगरसा बभूवुः ॥२३॥

तन्नायकास्तान् परितर्जयन्तः, पुनः पुनस्तं प्रतिसर्पयन्तः ।
श्रान्ता बभूवुः किलमन्युमन्तः तथापिनाभूद्दुगततद्भयान्तः ।।२४।।
अन्येऽथ शूरा यवनाधिपस्य, क्रूराशयाः केचन दुर्णयस्य ।
आगत्य योद्धुं स्मययुक्तचित्ताः, संग्रामभूमौ परितःप्रवृत्ताः ।।२५।।
अत्यल्पसंख्यै रपि भूपवीरैः, तैश्चाऽपिधीरैः प्रतिपक्षभीरैः ।
कीनाशगेहातिथितां वराकाः, किं लम्भितानाऽपरमांसकाकाः ।।२६।।
शुचिस्थितिश्चाऽपिविचित्रभानुः सचित्रभानु र्निजवंशहानिम् ।
आलोक्य रुष्टोनु परं दिदीपे रसाऽपि यत्सा विरसाबभूव ।।२७।।
ग्रीष्मे जलाभाववशात्तदानीं वाहीकयुद्धे मतिमान स हानिम् ।
निश्चित्य दुर्गाश्रयणं विधाय, चक्रे मतिं वैरिभटक्षयाय ।।२८।।

अथकूट नीति धुरन्धरा म्लेच्छसैनिकप्रवराः कृतबहुधनधान्यादि संग्रहाः महाविग्रहाः परमसुभगंतद्दुर्गं समन्तादवरुध्य तत्प्रत्याक्रमक्रम माकलयांबभूवुः ।

शहवाजखानो यवनप्रधानः मानीतदाशूरजनाधिमानः ।
उपेत्यसेनाधिपतित्वमद्धा, ततानयुद्धंविकटंसुयोद्धा ।।२९।।

वीरसैन्यपरीतः संग्रामविज्ञप्राज्ञलोकप्रगीतः श्रीप्रतापसिंहोऽपि वारं वारं विद्विषां महामदजुषां तेषां साभोगं तमभियोगं विफलीकुर्वाणः साधुसंकलिताश्रित लोकत्राणः सभ्यजात्येकप्राणः कंचित्समयं यावत् तत्रैव विरराज । परन्तु—

धान्यादिसंग्रहकृतेसुविधेरभावाद्, भङ्गात्तथाप्रतिभटक्षयकृच्छतघ्न्याः ।
शोषाज्जलस्यचशुचेःप्रखरप्रभावाद्,दुर्गस्थितिंक्षितिपतिःकठिनांसमेने ।।३०

एकएवविशालरूपःकूपस्तत्रात्रशिष्टोयस्यपानीयंपानीयंयथाकथमपिसैनिकलोकक्लेपर्याप्तमभूत हन्तसोऽपि यवनाधिपानुवर्तिनाऽर्बुदपतिना महादुर्मतिना पापगतिना दूषितं व्यधायि तज्जलं विना रणमन्तरेणैव मरणं भावीति सम्भाव्य दुर्गरक्षायै च सोनगरान्वयावतंसं शूरवरप्रशंसं तेजोविडम्बितचण्डभानुं भानुसुधन्यं सारिभितसैन्यं नियुक्तीकृत्य कुम्भलमेरं परित्यज्य चौहडगढ नामकं दुर्गं सपरिवारः धर्मावतारः समाससाद । तस्मिन्गतेतस्यशत्रुलोकाः सालोकानिर्भयशोकाः सहसाःसहसा दुर्गमाक्रम्य-

राजसैन्यपृष्ठेनयोद्धृप्रत्तिष्ठेन सशनिवीरेणभानुवीरेणतुमलंप्रधनंचक्रिरे। सोऽपिचिरंतेषां युद्धकण्डूत्यपनोदं प्रकटयन् देवगत्यादेवभावंप्रपेदे वैरिसैन्यैश्चतदनन्तरं तत्राधिपत्यं संस्थाप्यनितरांप्रसेदे।

उदयपुरं माहात्रतवानः सानन्दं रिपुसैन्य सुपानः।
स्वायत्तीचक्रे वत दीनं ततः, परं शरणेन विहीनम् ॥ ३१ ॥

यत्र स्थाने च तत्रभवान् समहान् प्रतापसिंहो वासमकरोत्तदपि निरर्गल मुद्गला दुर्मुखैश्चारमुखैः प्रतीत्य सर्वतः समागम्य रुरुधिरे तत्सैन्यप्रधानः फरीदखानश्च झटित्येव तं निग्रहीतुं समुद्युयुजे।

चन्द्राभिधंहन्तपदंनिरुद्धं शत्रोर्बलैश्चण्डबलैस्तदीयम्।
अन्नादिसंप्राप्तिनिमित्तभूतछिद्रेष्वनर्थाबहुलीभवन्ति ॥ ३२ ॥
तथाऽपिधीरोरविवंशनन्दनः प्रतापसिंहो रिपुमान मर्दनः।
नारोचयद्वैरिवशंवदत्वं व्यक्तीचकाराऽथ दृढव्रतत्वम् ॥ ३३ ॥
अन्नाद्यभावाद्धवत हा महामनाः, स्थानं मनोहारि जहौ सजन्मनाः।
महीपरूपः श्रितपालनोत्सुकः, सापत्तिवासं नगरो चयेतकः ॥३४॥
किरातलोकाःपरवारणज्ञाः स्वराजसाहाय्यकृते कृतज्ञाः।
चक्रुस्तदायं बहुधा प्रयत्नं कोवर्णयेत्तं कविलोकरत्नम् ॥३५॥

समुचितवासस्थानाभावात्सविरोधितशठः सुकृतकर्मकमठःपर्वतात्पर्वतान्तरं निरन्तरं भ्रमन् यथावसरं च प्रत्यासन्नं वैरिसैन्यंविपन्नं कुर्वन् युद्धविशारदः कतिचिच्छरदो यापयामास। अथैकदाऽलक्षितागमा निरागमाः महाखलाबहवोमुद्गलाः सहसागत्य सुखमासीनं शस्त्रास्त्रविहीनं तत्सैन्यं नानाप्रहरण प्रहारैः संहर्त्तुमुपचक्रमिरे। तदाचयुद्धकलाप्रवीणाःवीरधुरीणाः प्रत्यर्थिप्रगतिरोधाअपिबहवोयोधाः पञ्चत्वंप्राप्ताः। परन्तु दिष्ट्या पराक्रमानुरागः समहाभागः सभ्यतरप्रतीपःक्षोणीपः, परेशकृपयातत्क्षणमेवसुचेतीभूयकृतव्यूहंसपत्नसमूहंसुतीक्ष्णधारेण करवारे(ले)ण खण्डयन् परितश्चक्षिपंस्तदुत्तमाङ्ग निहितपादः सहर्षविषादः स्वयं ततः सकुशलमेव निश्चक्राम। लोकान्तरं प्राप्तान् परमाप्तान् विलक्षणशौर्यपूरान् स्वशूरान् भूयोभूयः शोचन् दुश्चरितभृतां तेषां, विद्विषां दुष्कर्मफलोपभोगाय कृतदृढसंधः सनिपुणप्रवन्धः शीघ्रमेवसमुचितसैन्यसंग्रहगृध्नोऽजनि तस्यशत्रवश्चधीरतासनाथेमेदपाटनाथे तस्मिन् परस्मिन्संगरस्थाना सतो

निर्गते परस्परं संभूय मन्त्रणां चक्रुर्यत्संप्रति प्रतप्तप्रधानसैन्यः सम्प्राप्तभूरिदैन्यः कृतातिसंतापः सप्रतापः सर्वथापि न प्रभवति योद्धुमस्माभिरिति । केचन प्रलम्बकूर्चाकुलगल्लामुद्गलमल्लाश्वसप्रकर्षहर्षं दधाना अट्टहासं विदधाना अवोचन् अरेयोद्धुं न प्रभवतीति विमुच्यते नातः परं समूलोमेदपाटभुवि पदमपि निधातुं पारयेदिति वक्तव्यम् । अतः स्वप्रभुरपि तद्विजयमङ्गलसमाचारप्रदानेन सन्तोषणीयः, अथ दुर्व्यसननिरूढः सोऽपि मूढ स्तत्प्रहित समाचारं संसार मवगम्य प्रकटितबहुशर्म्मा सकौतुककर्मा धन्यवाद पुरःसरं सेनानायकप्रवरं निदिदेश शिलोच्चयाखुभूतः स वैरिवालदूतः कदाचिद् भूयोऽपि तत्रसुगुप्तं चरन् युष्मदहितिततिवन्हौ पतितुं धृतपक्षः शलभतां नलभतामिति किंचित्कालं पुनरपि तद्गतिं प्रतीक्षमाणा महाप्राणा भवन्तः स्वशक्तिं रक्षन्तस्तत्रैव तिष्ठन्तु हताशं तं राजपुत्रपाशं कथाशेषं कृत्वैव सत्प्रसक्तिसम्पत्तिः सम्पादयितुमलम् ।

अथावसरप्रतीक्षः स सत्य समीक्षः सुराजाऽपि कदाचिद् भूमिवलयभ्रमणबलिभि ललाट तट न्यस्ताञ्जलिभिः शुद्धधीभिः कैश्चिच्चरणविधिभिः शत्रुस्थितिं निर्णीय क्वचन विशाले गोत्रान्तराले प्रयाय कृतमहाप्रकारान् वैरकारान् सपद्येवाक्रम्य सविशेषं निःशेषयामास । कैश्चनभिल्लमल्लैः भल्लमतल्लिकाभिः कैश्चिन्सुतीक्ष्णमुखैः शिलीमुखैः शकलीकृता महोत्कटा अपिबहवः शत्रुभटाः सचीत्कारंमृताः, निरवद्यधनुर्वेदबोधैः कैश्चिद्बाहुजयोधैश्च नालीकैर्नालीकैरन्यैश्च राजन्यैः समुदग्रकोटिविकासैश्चन्द्रहासैः प्रासैश्च शिरसिविच्छिन्ना विपन्नाः सुमांसल पुद्गला मुद्गलाः तदङ्ग निःसृत रक्त धारासारैश्च तत्रत्यशिलाशकलान्यपि निखिलानि रक्तान्येवाऽभूवन् । तत्सैन्यस्य च प्रभूततरं रणोपयोगिवस्तु निकरं स्वायत्तीकृत्यततः परावृत्य सन्तुष्टचेता स मेदपाटनेता स्ववीरपराक्रमं प्रशंसन् निजवासभुवमाससाद प्रतिसैनिकं च तत्तद्रुचिविभागं ततोऽपहृतवस्तुजातं वितीर्यप्रससाद ।

फरीदखानोऽक्वरस्यसेना ध्यक्षःस्वपक्षोन्नतिबद्धकक्षः ।
स्वयंनिगृह्याशु नृपोपकण्ठं तंनेतुकामः किल यो विमुग्धः ॥३६॥
विशालकायः स्मययुक्तचित्तस्तन्मार्गणव्यापृतिलग्नताकः ।
कदाचि देकान्त गतोवराकोधनः सभूपेन हतप्रभाकः ॥३७॥
प्रोक्तश्चकिं भोः कथयस्वकिंते करोमिखानात्मजमुग्धबुद्धे ।
मयाधृतः संप्रति यदविधातुं प्रभुर्भवेस्तत्तरसा विधेयम् ॥३८॥
दयालुचेता नतपूर्वकायं तं भूरिमायं सचलोकनेता ।
निःशस्त्रपाणिं प्रविधाय मानी मुमोच संकोचवशं वशीनः ॥३९॥

धन्यः प्रतापोऽजनिभूमिमण्डले नकाऽपि यस्य प्रतिमाप्रतीयते ।
वैरायमाणेऽपि जने नतानने दयारसोयस्य तथा विधोऽभवत् ॥४१॥

दयालो स्तस्य नानाविधानि श्रूयन्ते खलुविचित्राणि चरित्राणि । एकदा कदाचित्

राजकुमारोऽमरसिंहाख्यः कान्तगुणःशूराग्रगसंख्यः ।
आखेटं कुर्वन् रिपुसेनां सिंहपुरेऽदुलखान वरेनाम् ॥४२॥
दृष्ट्वा विक्रमरसोऽतिशूरः क्रूरसमाजशासनोऽक्रूरः ।
लुण्ठितवान् सहसैव तदानी चक्रेऽसौ यत्तद्वहुहानिम् ॥४३॥
तत्र हन्त ये वीरं मन्या स्तेऽपि द्रुतास्तत स्ततदैन्याः ।
अबला अबला अपिहादीना स्त्यक्तास्तैस्ता रोदन लीनाः ॥४४॥
दुर्बलपीडनदक्षा मूढाः कामान्धा दुर्भावनिरूढाः ।
निर्लज्जाःसद्भावविहीनाः किं नो विदधति कर्मकुधीनाः ॥४५॥

अत्युग्रशस्त्र प्रहारस्य राजकुमारस्याक्रमणमसहमाना स्तेयवनयातुधानाः हतशेषाः समाश्रितदिगन्त प्रदेशा रोदनमात्रबला नितान्तविकलाः स्वरूपलावण्यपोषा योषा अपि सह नेतुंनापारयन्–तदा सधवा अपिताविधवाइव निराश्रयाः सप्रश्रयाःस्वयमेव कुमारभटभयाद् विदूषणानि भूषणानि झटित्येवावतारमवतारंतत्पुरतः पातयन्ति स्म । अथ सदयहृदयः राजतनयस्ताः समाश्वासयन्नुवाच अयिसुवदना यवनाङ्गनामास्मभैषतयूय मस्मत्तो न वयंलालितमदनायवना इव सपत्नपत्नीष्वपि शिष्टाचार संहारं विनयनिवारं दुर्व्यवहारं वितनुमः, तदेतानि नानावर्णान्याभरणानि सुभगानिवोऽङ्गान्येवविभूषयन्तु नातोऽस्माकं मनागपि प्रयोजनम् । तद्यथास्थानमेवविधेयमेतन्नियोजनम्—सौभाग्यवतीभिर्भवतीभिःर्भवतीभिः—ये केऽपि नः शत्रवस्ते स्वयमेवपलाय्यान्तर्हिता अतिभीताः; शरणागतान् भयद्रुतान् न्यस्तशस्त्रान्शत्रूनपि नवयंहन्मः यैस्तैदुर्मदैरस्माकंसर्वस्वमपहृतंतेषामेवाधिकृतं वस्तु निघ्नीकृत्य नयामः यद्यपि दुराचारिजन द्रव्यापहारोऽपि नराज्ञांकृते दुरोदर्कोमतस्तथाऽपि स्त्रीधनापहरणं नोचितमिति नः शास्त्रेषु आदिष्टं तन्नैवयं युष्मन्मण्डनानिग्रहीतुकामाः, नापि दुरिच्छा म्लेच्छा इव परवनिताभि र्भोगकारिणो दुराचारिणः, किन्तु समत्तप्रहारिणः साभिमानसपत्नमदविदारिणः, निर्भयतमा संग्रामकाननविहारिणः सदाचारिणः सुदृढभुजा वाहुजाः स्म । ताश्च कुमारस्य सूक्तिरसं कर्णशुक्तिकया निपीयसन्तुष्टमानसाः सत्यः तदर्थमनेकान् धन्यवादाना

शीराशीश्च ददत्य स्तिर्यग्न वलितै र्ललितललितैः प्रमदविकासै दृग्विलासै स्तदीयं वरेण्यं रूपलावण्यं कृतज्ञतयेव संभावयांबभूवः । ततः काश्चन महाबलिष्ठान् पराक्रम निष्ठानपिसकरुणाँ स्तरुणा नालोक्यलोचनानि सफलजन्मानिमेनिरे । ततः केचन राजन्य भटा यथा तासां सौन्दर्य्यार्जुन(सस्य)लालसानपि लोचनमृगान् पराङ्गनादर्शनजन्यभीतिदण्डेनैव यथाकथमपि निवारयतुं प्राभवन् सानुताया इव वीरकिराता अपिराजकुमारभियातद्रूपसर्वस्वापहरणरसं मानसं स्वजनकमहोदयस्य निरोद्धुं समर्था अभूवन् । ततो महाभुजःस महाराजतनुजः स्वविरोधिलोकं गतश्लोकं प्रति शिक्षाविशेषदित्सयेव स्वजनक महोदयस्य संयमितां परदारान् प्रतिप्रतिपियादियिषुरिवसंसृतौ च सौजन्यजन्ययशोविवुवूर्षरिव ततः सपरिवारान्-तत्सैनापतिदारान् ससत्कारं न्मगादीत् महाकामिनोयुष्मत्स्वामिनो विरोधधिजनाङ्गना लज्जाभयधना अभिभूय तत्सतीत्वरत्नमपहर्तुं सदा यतन्ते तेषां स दुर्व्यवहारो नितरामेवलज्जावहः । न जानन्ति ते दुर्व्यसनारूढा महामूढा यत्तेन मनस्विलोकाः कथंकारं भवन्ति धृतबहुशोकाइति तद्वयमद्य तद्विषये तान् किमपि बोधयितुं तत्रभवतीर्भवतीः श्रीमहाराजोपकण्ठं नेतुमिच्छामः भवत्योऽपितत्पुण्यदर्शना मृतेनात्मानं पवित्रीकृत्य परमलाभभाजो भविष्यन्तीति मन्ये तद्विसृष्टाश्च स्वस्थानमुपेत्य स्वजनानपि सद्व्यवहारविषये परिचयविशेषं कारयितुं प्रभविष्यन्ति तन्नो काचिदापत्ति स्तर्हि सानन्दं निःशङ्कं चभीमत्यो भवत्योऽनुकूलाः भवन्तुनः । विदिततत्सौजन्या महावदान्या सासेनानी गेहिनी तद्वचः सन्तुष्टा परिवारजुष्टा कुमारेणातेन स्ववासं नीता । अथ स पितरं प्रणम्य प्रोवाच तात प्रातरेवातः आखेटकृतेगतेन मित्रसैन्य-युतेन मया सस्मयाऽस्मन्निग्रहवद्धलक्षा कलितवैरायमाणपक्षा महोत्पतिनीकाचित्य-ताकिनी विलोकिता । ततःसंजातरुषा वीरवयस्य जुषा च मयासपद्येव परिभूता भीरुता नुगामिना स्वामिनासहैवऽस्मद्भयाद्केचित्तद्भटाः क्वाऽपि पलायिता युयुत्सव श्चाऽन्ये तत्रैवमहानिद्रांगताः तथासतितत्सर्वस्वंयथास्व मस्माभिर्देवपादोपकण्ठमानायि तत्सेनापति पत्न्यपि सपरिवारा भवद्दर्शनायायाता ।

वीरोचितं सोऽथ सुतस्यकृत्यं निशम्य भूपो नितरां तुतोष ।
प्रोवाच तं वत्स कथं वराकी सानायिता तेयवनीषुकाकी ॥४६॥
क्व सूर्य्यवंशः क्वपराङ्गनायाः सन्दर्शनाकांक्षि मनस्त्वयोगः ।
किमर्थ मत्रानयनं तदीयं क्षत्रधर्ममार्गात् सुधियः स्खलन्ति ॥ ४७ ॥

कुर्वन्तुते दुष्टधियो यथेच्छं पापानि सद्धर्मविबोधशून्याः ।
अस्माभिरार्यैः किमु पातनीयं स्वधर्मरत्नं नरकाय वत्स ॥४८॥
मन्ये न दुर्भावमुपेत्य सौम्य कृत्यं त्वया कारि मदात्मजेन ।
तथाऽपिलोको विपरीतबुद्धिः संभावये ज्जातु ततोऽन्यथैव ॥४९ ॥
शरीर केदारमिदं तदैव फलाय कल्पेत हिताय सौम्य ।
संकृष्य सत्याचरणादिसीरै रूप्येत चेद्धर्म्मविधान बीजम् ॥ ५० ॥
उत्पेत्यतां सोऽथ सतांवरिष्ठः प्रतापशाली सुकृतप्रतिष्ठः ।
प्राहाऽयि मासुन्दरि देवि खिद्या स्वतन्त्रमात्मान मिहाऽपिविद्याः ५१॥
आनायिता बालधिया त्वमत्र यन्मे कुमारेण मुधैव तत्र ।
स्थिता सुखं वा विधिवैपरीत्या त्क्वचिद्भवत्येव वियोग योगः ॥५२॥

आश्वास्य तामिति नृपः समहानुभावः ।
सत्कार पूर्वक मथो रिपुसैन्य वासम् ॥
संप्रापय त्सकुशलं यवनाङ्गनापि ।
भर्त्तार मेत्य नृपतेःसुगुणानशशंस ॥५३॥

ततःचाकित्सुखी तस्याः सखी प्रसन्नवदनांरहःस्थितां तां पप्रच्छ—अनुभूत मेदपाटराज सविशेष वरिवस्ये वयस्ये तत्प्रशस्तं हस्तं गताऽपि कथंकारं ततः प्रत्यागता किंविधः सहिन्दूराजः किमतिप्रथितया दृक्शुक्तिकया त्वया तत्स्वरूपामृतपानावसरोऽवापि त्वद्विषये च किंप्रकारोव्यवहारो व्यधायि राज प्रवरेण तेनेति ततःसाव्याजहार ।

किं पृच्छ्यते सखि मुहुः प्रति मांभवत्या ।
हिन्दूपते र्व्यवहृतेर्विषये ऽ ल्पमत्या ॥
दृष्टो न किंपरमशुद्धि चरित्रधारी ।
तस्यात्मजः सचतदालिगणेन हारी ॥५४॥
तेनैव तस्यजनकस्य गुणानुमानं ।
कार्य्यं त्वया पृथुमतेऽत्र यथात्मभानम् ।
सत्कार पूर्वक महं प्रहितास्मि येन ।
शत्रोर्ध्रुटयपि न कोऽपि समोऽद्य तेन ॥५५॥

आर्य्याजनाः सखि यथा प्रथिताबलिष्ठाःशूरा स्तथैव कृतिनो निजधर्मनिष्ठाः ।
तेषां मतं परमसुन्दरमस्तिनूनं यत्पारवश्य समयेऽपि मनो न दूनम् ॥५६॥
अस्मन्मतं तु सखिनाऽस्ति तथा प्रभावं नालोकि संयमलवोऽपियतःसभावम् ।
यत्काम तन्त्रित धियो यवनाःसदैव कौटिल्य मादधति हन्त पराङ्गनासु ॥४७॥

अहमिव यदि काचिद् हिन्दुनारी वराकी
यवनवश मुपेया ज्जातु दुर्दैवयोगात् ।
कथमिव मदमत्ता स्तां सती हीनवृत्ताः
सखिमदनविचित्ताः संत्यजेयुः प्रमत्ताः ॥५८॥

वयस्येऽसौ राजा विमलचरितः सुन्दरवपुः
स्वतन्त्रः स्वं राज्यं कुशलयितुकामः प्रयतते ।
अमी नः पापिष्ठा स्तमपि पुरुषा निर्दयहृदः
कुतः संहर्त्तुं हा विदधति समुद्योगपरताम् ॥५९॥

यथार्थभूतं तस्या वयस्याया वचनं श्रुत्वाऽतीवप्रसीदन्ती निजलोकदुर्व्यवहारे च विषीदन्ती तदुक्तं च पुनःपुनरनुमोदयन्ती तां प्रति निजगाद । यद्यपि सखि त्वदुक्तं सर्वमपि युक्तियुक्तं वर्त्तते तथाऽपि नाऽत्र विषयेऽमीषां कुक्षिम्भराणां नः पुरुषाणा मेवापराधः स एव कामान्धितशेमुषीकः सभ्यप्रतीकः सून्मत्तसहायो विचित्रमायः पातसाह एवापराध्यतितराम योलोभहतचेताएषां नेता निरपराधेप्यत्रमहाराजे महात्मनि प्रत्यहं नवान्नवानत्याचारप्रहारान् कलयति—विदधातु भगवान्शरणागतवत्सलस्य मांसलभुजबलस्य मङ्गलंतस्यभूपस्य। ततः स्मृततत्प्रशस्तकार्य्या सासेनापतिभार्य्या भूयस्तांवभाषे ।

धन्यास्ताः सखियोषितः क्षितितले सौभाग्यभाजस्तथा
यासां प्राणसमा महाबलभुजाः सौन्दर्य्य सौजन्यतः ।
तादृक्षा वृतिनः सुरानपिभटा जेतुं समुद्युञ्जते
कामान्धा व्यसनाकुलास्तु पतयोयासां वयं ता हताः ६०
त्यक्ता यैर्भयसंकुलै र्वयमहो आपत्तिकाले शठै
स्तैर्निर्लज्जमनोभि रालि सुरतिः कार्य्याकथं सांप्रतम् ।

किं कुर्मो विधिना परंविरचिता लज्जाबलाहाऽबला
स्वातन्त्र्यं नहि विद्यतेबत मनाक् शोच्या व्रजामःकुतः ॥६१॥

यासामार्य्यरमणीनां योषिन्मणीनां प्रवरावरासाथविधाः सदाचारिणः संयमव्रतधारिणः सन्ति येचपराङ्गनाङ्गदर्शनेऽपिपापमाकलयन्ति ताश्चदयिताः प्राणव्ययेनाऽपि परिरक्षन्ति विविधवेशभूषाशनवसन दान संमानैः सदैव तोषयन्ति ।

पतिप्रियास्ता अतएव धन्याः सोढुं समर्था नहि तद्वियोगम् ।
चिताग्निमध्ये विनिपत्य सद्यः सदैव तैः स्वर्गपदं लभन्ते ॥६२॥
प्रेते धवे यद विजहाति देहं सभ्याङ्गना तुष्टमना वयस्ये ।
हसन्ति तां मूढधियो मुधैव विदन्ति ते प्रेमरसं हि नैव ॥६३॥

यस्यां जातौ विमलमतयः सन्ति धर्मप्रधानाः
शूरा लोकाः परहितरता अङ्गनामानदानाः ।
सैका जातिः सकलभुवने विद्यतेदिव्यरूपा
तस्या भव्यं रचयतु तरामाद्यशक्तिः सुरूपा ॥६४॥

धन्यो जनो भूमितले ऽत्रकोऽपि शसन्ति यं शात्रवयोषितोऽपि ।
मृतोऽपि जागर्ति स एवधीरः कण्ठे सतां यस्यगुणालिहीरः ॥६५॥

चतुर्विंशति वर्षाणि यावत्सधीरताधनः सुमांसलापघनः प्रत्यर्थिमानभञ्जनः प्रजामनोरञ्जनः, जयपराजयजन्य सुखदःखेअनुभवन्नपि युक्तयोगीव चित्तचाञ्चल्यं नोपलेभे कदाचिद् दुराचारधेनाः शत्रुसेनाश्च सदैव तन्निग्रहकामा नानोपायचिन्तनाविश्रामाः, अपिकृतकार्य्यता विमुखता मुपेत्य देहलीं गत्वास्वनायक मभ्येत्य न्यवेदयन् स्वामिन् सिंहइव काननविहारी स्वतन्त्रताव्रतधारी—महाकराल प्रहारी संमुखागतवैरवृन्दप्राणसंहारी सोऽमित्रः प्रतापो नाऽमराजपुत्रः कृतबहुयत्नैरपि अस्माभि जेंतुं न सुशकः, कतिचिद् वारान् वशीकृतप्रायोऽपि केनाऽपिलोकोत्तरेण सुस्थानपि निरोधनसंस्थान् नोऽनेकान भटान् व्यापादयन् निरगमत् ।

यद्यपि तस्य वहवोऽपि सायुगीना अनतिदीनावैरिसंकटा भटाः संग्रामग्रामेषु सुप्रथिता निहताः, तथाऽपितस्योत्साहसन्नाहो वियद्व्यापो नाद्यापि क्षीणो ऽभवत् । तदन्नादि प्राप्ति स्थानेषु रुद्धेष्वपि नास्य काऽपि प्रतीता हानिः—यत्तसमहाधूर्तो यथावसरं सुशठन् किरातादिभटान् प्रहित्य विश्रब्धं सुसस्यान्येव मोषं मोषं सुखपूर्वकं निर्वाहं करोति—इति

इति निशम्य वचो यवनाधिपोमृतसुतो व पिता ऽजनि दुःखितः ।
स्वयमहो पुरुषो ऽसुखकारणं विरचयन् सुखमिच्छति मूढधोः ॥ ६६ ॥

परित पंश्चाऽऽहतान्—युष्मासु विश्वस्यैन मया स विरोधितोभूपः । तन्निम हमन्तरेण धिङ् मे सम्राड्भावम् योनम्र प्रख्यं प्रतापमपि वशीकर्त्तुं नाद्याव धिसमर्थोऽभूवम् । अस्तु दृष्टं वः शौर्य्यं । वर्षासमय स माप्तौ पुनरपि स्वेष्ट सिद्धयै यतिष्ये संप्रतियूय मपितावत् सुख विश्रान्ति मनुशीलयत ।

ततः कदाचित् स्वामि कल्याण कामोऽब्दुल रहीमनामोत्तमगुणः—महाराज प्रताप दिव्य गुणानुरक्तो भगवद्भक्ति रस सिक्त चित्तो महाराज महिम द्योतकानि कानि चिन्निरव द्यानि पद्यानि निर्माय स्वेनं प्रति प्राहिणोत् ।

राज्यं धनं बन्धु जनादि सर्वं न स्थायिरूपेण विराजतेऽत्र ।
यशोहितादृक् शुभकर्मजन्यं वस्त्वस्ति यन्नो निधनंदधाति ॥६७॥
राज्याच्च्युतश्चाऽपि धनैर्विहीनः प्रतापसिंहो धृतिमान् प्रधीनः ।
यत्कारणाज्जातिमणिः प्रजातः स कोऽपि राजन्ऽपिसु गुणो विभातः ॥६८
त्वं चाऽपि हे नाथ समर्जये स्तत्पुण्यं यशोयेन भवेत्त्वदीयम् ।
लोकान्तर स्थायि तथेति बोध्यं न साधुवि द्वेषविधि हिताय ॥६९॥
अयं हिंसावृत्ते र्भवतु विरतोमे नर पतिः
कृतज्ञो निश्चितस्य प्रगुण गुणराशिः शुचिमनाः ।
इतीत्थं तद्युक्तया प्रकटन मसौतस्य विषये
व्यधात्सत्याग्राही समुचित निगादे हि रमते ॥७०॥

अथामर सिंहतातः सपत्न सैन्य व्रातः सर्वथापि स्ववासपर्वतोपान्त प्रदेशात्प्रयात इतिनिश्चित्यापि वर्षान्ते पुनरपि तदा गमन सम्भावनया तत्प्रति विधा न कृते चेतसि चिन्ता वितानं ततान ।

यत्कारणा न्महाकुलीनाः सांयुगीनाः सदा दत्तारि महा संकटा भटा अति संख्याः—संख्याङ्गरोषु पञ्च त्वं प्राप्ता येऽपि केचन ममभक्ता युद्ध कला सक्ता सौजन्य विशिष्टाअवशिष्टाः सन्ति ते ऽपि निरन्तर युद्धकृत्यादूना अतिन्यूनाश्च ।

सन्धिपत्रं समुल्लिख्य बन्धु वात्सल्य चोदितः ।
तच्च शत्रूपकण्ठं स प्रेषयामास दुःखितः ॥ ७१ ॥
आलोक्य तत्सोऽपि महा प्रसन्नो भवन् रिपुः प्राह सदस्य वर्गम् ।
प्रतापसिंहोऽपि हठी कृपां मे वावश्यमानो ऽजनि दैव योगात् ॥७२॥

निशम्य तत्ते मुदिता बभूवुः सदस्य लोका गतभीत शोकाः ।
पृथ्व्यन्तराजान्त नृपस्तु कश्चि ज्जहास मन्दं निजगादवाऽपि ॥७३॥
नेदं दलं तस्य दृढव्रतस्य प्रतीयते संगर तत्परस्य ।
अन्येन केनाऽपि विलिख्य दत्तं तद्वेषिणेति प्रतिभाति तत्त्वम् ॥७४॥
त्वमेव तन्निश्चित वृत्त बोधे भवेरलं त्वां प्रतिमे निदेशः ।
म्लेच्छे श्वरस्येतिवचः प्रसंगात्स नीति दक्षो धृत जाति पक्षः ॥७५॥
विन्यस्य भूपः प्रति पद्य चित्रं प्रतापसिंहं प्रतिसोऽथ पत्रम् ।
विसृष्टवानेक मनेकशिक्षं सुगुप्तरूपेण परात्मरक्षम् ॥ ७६ ॥

यवनेश्वरोपकण्ठं संधि पत्रं प्रहित्य जाति संमान व्रतं च पुनः पुनः संस्मृत्य कृतबहुधानुतापः श्रीमान् प्रतापो यथावसरं कृतात्मबोधनं विचारशोधनं तदीयं सद्भाव पवित्रं पत्रं समासाद्यतत्क्षणमेव मोहं निरस्य कर्त्तव्य निष्ठतायां पुनरपिरुचिं बबन्ध स सत्यसंधः । परंधनाभावात्प्रबल शक्तिना प्रत्यर्थिना योद्धुं कथं कारं प्रभवेयमिति चिन्तयन् स्वभूमि त्याग एव स प्रतिश्रेयानिति मन्वानः तत्तोनिश्चित प्रस्थानः समभवत् ।

तदानीमेव विदिततत्समाचारः पुरातनराज कोशव्यवस्था कार्य्यकारः श्रेष्ठि प्रवरः कश्चन महास्थविरः वलिललित धामा भामा शाहनामा सहसा समागम्य स्वाराजानं प्रणम्य च प्रोवाच महाराज मेदं पाटभूमिं त्वन्नाथामप्यनाथां कृत्वा क्वगन्तु मुद्यक्तोऽसि त्वत्पूर्वज भूपो पार्जिता मत्कोशेसाधु संरक्षिता एतावत्यः सम्पत्तयः सन्तियतो भूयोऽपि कृत सैन्यादिप्रबन्धो मदान्धं तं दिल्लीस्थं व्यसन मतल्ली दुर्व्यवस्थं कर्त्तुं पटिमान मेष्यसि तत्कृतं चिन्तयेति ।

भामाशाहा दधिगत धनो धन्यवर्यात् सदर्याच् ।
शक्त्युत्साह प्रथित हृदयो भानुवंशावतंसः ॥
अत्याचार प्रथन पटुभिर्वैरिभिः संगराय ।
संजाग्राहा तुलबल धृतो भूरियोधा नरोधान् ॥७७॥
देशत्यागे विहित रुचिरप्यार्य्यवर्य्यः प्रतापः ।
भूयो युद्ध प्रकर निकरं संग्रहीतुं प्रवृत्तिम् ॥
कुर्वन् रेजे निजजन पदश्रेयसे माननीयः
को जानीते विधिविलसितं किंकदाकस्यभावी ॥७८॥

इति प्रतापचम्पूकाव्ये खण्डयुद्धवर्णनात्मकोऽ—
ष्टमानिश्वासः ।

# अथ प्रताप चम्पू काव्ये नवमो निश्वासः

समाधिमन्ताऽपि समाधिहन्ता धर्मप्रियः सर्वजगन्नियन्ता ।
त्रिशूलधारी भगवाँस्त्रिशूलं क्रियात्सतां सन्तत लूनमूलम् ॥१॥
दशहराऽवसरे सयशोधनः कलितदेव समाज समर्चनः ।
गुरुजनानुमतः पृतनायुतः प्रचलितोविजयाय जयद्युतिः ॥२॥
हरिणवृन्द मभूदव्रजतः सतः प्लुतिभृतः किलदक्षिणपार्श्वतः ।
चषकपक्षिगणो ऽपि महीभृतः समभवत्तत एवतथा स्थितः ॥३॥
विमलवस्त्र सुपुट्टलिकां दधच् शिरसि सन्ददृशे रजकः पुरः ।
सजल कुम्भ शिराः सुभगाङ्गना पथि पुरो मिलिता मुदितानना ॥४॥
सुरभि शीतलतादि गुणोऽनिलः समनुकूल मथास्य महात्मनः ।
विजय शंसन चुञ्चु रवाद्वभौ, सरससारसयुग्मरवश्रुतिः ॥५॥
खिखिरियाय च दक्षिण तो मुहुः स्फुरण माप दवाम विलोचनम् ।
द्रुत समुत्प्लवनं पथि नाकुलं, किल कुलं विदधे मुदितो दितः ॥६॥
सलिल संभृत पल्वल संनिधौ क्वचन दृक् पतिता खग खञ्जने ।
नरपतेः कृतिनो जय काङ्क्षिणः शकुन शास्त्र विदो ऽस्य महापतेः ॥७॥
वामेतरस्तस्य करोऽपि राज्ञ पुस्फोर सम्यग् जयलाभ लक्ष्म ।
भविष्यतः कार्य्य गणस्य भावं विज्ञापयन्ते शकुनानि पूर्वम् ॥८॥
सहेषमश्व पृषदश्व वेगा नृत्यं ह्यधुः किञ्चिद पूर्व मेव ।
दन्तावलाः प्राज्यबलाश्च तत्र महामदा दीप्ति विशेषमापुः ॥९॥
संग्राम कामाश्च भटाः प्रसक्तिं दधुस्तदा साति शयां व्रजन्तः ।
जिगीषवो दैत्य बलं सुरावा स्मेराननाः सस्फुरितोरु बाहाः ॥१०॥
स्नातानुलिप्ताः कृतवेद पाठाः महीसुरा मङ्गल शंसनानि ।
पदे पदे तस्य कृते विनेतु र्भूपस्य पौराः पुरतः प्रणेमुः ॥११॥

दिशः प्रसन्नाः स्मितकाशपंक्तयः, प्रफुल्ल पङ्केरुह दिव्य दृष्टयः ।
स्वच्छाम्बरा स्तारकवृन्दमण्डनाः, सन्तोषयामासु रुपागतं नृपम् ॥१२॥
ग्राम्याजनाः स्वागतमस्य भूपतेः, सेना सनाथस्य यथायथं व्यधुः ।
यथावतारं[१] मुदितेन चेतसा, कस्तादृशः क्वास्ति नमानभाजनम् ॥१३॥

चतुष्पादिकावृत्तम्—

निश्चित विजयो भूमीपालः सोत्साहं गच्छन रिपुकालः ।
मार्गे प्रायः सर्वत्रैव प्रत्यपूजि सकलप्रजयैव ॥१४॥
भाग्यचक्र महो किन्नो विचित्रं भुवि विद्यते ।
नमनोन्नमनोद्भ्रान्ति र्यत् प्रतिव्यक्ति वर्त्तते ॥१५॥

तत्र च शत्रुपत्ते देवीरस्थाने ससंविधाने विहित सेनासंनिवेशः स्वीकृत मुद्गलेन्द्रनिदेशः श्रीप्रताप वृत्तान्त जिज्ञासा दत्तावधानः शाहजादखानः स्वपृतना-प्रधानः, सभामध्यासीनः प्रसिद्धैर्भटैरहीनः, समुपस्थितान्स्वाश्रितान् सभ्यजातिविपरीता चरणप्रसितान् समिदपलङ्कृटान् भटान् बभाण । अयिरणधीरा धर्मवीराः अस्मत्कृते प्रदत्त बहुतापः सप्रतापःपरं भगवता जगदीश्वरेण रसूलमहोदयानुरोधपरेण बहुकालान-न्तरं नः समीहितंसफलितम् । विरोधिमनोरथजातं च विकलितम् निःशङ्क मेवेदानीं प्रति नगरं ग्रामेग्रामेच निर्मीयन्तां सुव्यस्थानि मज्जितस्थानानि, संस्थाप्यन्तांबहुच्छात्र-मालाः कुरानपाठशालाः परन्तुकंचित्कालं पुनरपि प्रतीच्यःसोऽप्रतीच्यः, ततोनिखिले-मेदपाटप्रान्तेऽपि विक्रम्य विजय व्योममञ्जरीमञ्जरी दोधूयताम् । चिरकालात्तस्य हिन्दूराजकस्य समाचारो न लब्धोमन्ये स प्राणत्राणाय क्वापि लायितः । तथासति

स सर्व जेता प्रभुरस्मदीयः किंनाऽजनिष्टाऽ घरिपु र्यदीयः ।
प्रतापसिंहोऽपि विभीय देशं विहाय यातो विविशं विदेशम् ॥१६॥
यत्कारणाद हिन्दु जनोऽद्य गर्वं धत्ते मुदा सौम्यभटा अखर्वम् ।
तस्मिन् गते ऽतः सकलोऽपिजातः शोच्यःसकिं नोगुरुता प्रपातः ॥१७॥
इत्येव माद्यै र्वचनै र्यदासः सेनापति स्तुष्टमना हताशः ।

१—यथासेनासन्निवेशम् ।

अतूतुषत्स्वीय भटान् प्रभावी तदागमत्सोऽपि विरोधि लावी ॥१८॥

आलोक्य तत्सैन्य मतीवमूकः विच्छायतुण्डो जनि वावदूकः।

सेनापतिः मुग्धमतिः ससेनः क्वसिंहनादे हरिणः प्लवेनः ॥१९॥

उत्थाय शीघ्रमथ भीतमना स्ततःस,

युद्धाय सैनिकगणान् प्रति संदिदेश।

भीत्याकुला अपि समे तरसैव सज्जाः,

स्तेहाऽभवन् परवशाः किमु नोविदध्युः ॥२०॥

ततः पर्य्याप्तसैन्यसंग्रहो ससत्याग्रही दुर्जनविनेता मेदपाटभूनेता प्रमुखावस्थं प्रमत्तावस्थं दुरूहं दुहं चमू व्यूहं सपद्ये वाक्रम्य निशित तरधारैः कुन्त शक्ति चन्द्र-हासा योधन वारै रुण्ड मुण्ड यामास। मुहुर्मुहुः समुदीरित महारणालोकाः सु-श्लोकाः विजय प्रफुल्ल वदनाः क्षत्रियवीरजनाः समुद्दण्डभुजदण्डा महाचण्डाः सिंहाइव समराङ्गणकानने वैरिवारणान् महारणानपि विध्वंसयन्तो निर्भयं विचेरुः।

हरिद्राघट्ट संग्रामे यावती द्विषतो बलैः।

क्षत्रियाणां कृताहानि कृता तैरपि तावती ॥२१॥

अल्ला यदि त्वं सदयोऽसि तर्हि पाहि द्रुतं मां म्रियमाणमत्र।

तोबा इलाही अयि शूरवीर संरक्ष मां त्वां शरणं श्रयामि ॥२२॥

इत्याह कश्चिद्द यवनो विलापी व्रणाकुलोरक्त समुन्न कायः।

आरात्समागत्य दया समुद्र स्ततसान्त्वना मार्य्या भटस्ततान ॥२३॥

हतावशिष्टाः प्रपलाय्य केचिद्द दिगन्तरालम्बन युक्ति माधुः।

कल्याणकामा रिपवो यदार्य्या भयद्रुतान् जातु न संहरन्ति ॥२४॥

ततःकेचन आपाय इनाभिधान स्थानावस्थानं सुस्थानं सेनान्तरं प्राणरक्षण कृते प्राप्ताः, क्षत्रिय शूर संत्रस्ता दैन्यग्रस्ताः। हन्त यन्निमित्तं तैस्तत्र प्रस्थितं हतभाग्य तया तत्राऽपि नतत्समीहितं हितं समाहितम्। तदनुपदमेव प्रगतया तत्पदं गतया-विततया तया महाराजपुतनया ससैवाक्रम्य तेऽपिदुर्विलासिनः तत्रत्यभटैः सह प्रादु-ष्कृत दुष्कृत फलोपभुक्तये कीनाश कारागारनिवासिनः कृताः।

विजय शालि नरपतिवरसैन्यां, नयन् विरोधिलोक मथ दैन्यम् ।
कमलमीर मुपगम्य तदानीं, चक्रे तद्रक्षक बलहानीम् ॥२५॥

अब्दुल्ला पदाभिधेयः पादशाहस्यपरमविधेयः सदाकृताग्र्य लोकापमानः साभिमानस्त दुर्गरक्षी विपक्षी विजिगीषा व्यापृतमते वसुन्धरापतेः सेनां निरोद्धुं परेराघुचक्राम विजयकामः ।

प्रतापोऽपि महाभागः शत्रुवृन्दनिषूदनः ।
दृष्ट्वै तन्निष्ठुरं प्राह कंसं व मधुसूदनः ॥२६॥

किमरे म्लेच्छ दुर्बुद्धे ! परस्थानं विदूषयन् ।
गर्वं वहसि मृत्युत्वां जिघत्सुरय मागतः ॥२७॥

योऽपि कोऽपि तवाश्वासी भवेत्तं धूर्तपुङ्गव ।
आकारय द्रुतं नैवप्रभुस्त्वं स्थातु मग्रतः ॥२८॥

अनर्गलाननः सोऽपि दुष्प्रवृत्ति संमाननः परमविषयि राज सहायकः सपत्न सेनानायकः निर्वाणोन्मुखो दीपक इव क्षणं प्रकाशित वीर्य्यसारः सदुर्दर्श सानुचरवारः प्रतापसिंह महाराज प्रचण्ड शस्त्र वन्हौ पतङ्गीभूयममार । चिरकालान्म्लेच्छ वास दूषिताऽपि तच्छोणित धाराभिरेव समुक्षिता कमलनीरभूमि स्तीर्थस्नातेव बभौ ।

याभूतपुरी प्राक् विशद प्रसादा जातामिषादै श्च महाविषादा ।
सानिर्विषादा वगता न केन भूयोऽपि तद्राज समागमेन ॥२९॥
यद्गविप्रयोगेन सुयोगितेव या राजधानी प्रमदाधिवासा ।
विक्रान्ति युक्तोद्धत दृष्टि चाला तद्योगतः साजनि भव्य भाला ॥३०॥
ततः सपत्न प्रतिकार कामः सुमाननीयः सुकृतैकधाम ।
दैत्यान् स दैत्यारि रिवोरु भालः संहर्त्तु मारात्क्षितिप श्चचाल ॥३१॥
तत्सैन्य वाहोत्थित धूलिमारा दालोच्य दारा इव तेसदाराः ।
भयाकुलाः केचन जीवनाय व्याजेन केनाऽपि गता वनाय ॥३२॥
गोकुण्ड दुर्ग माक्रम्य सहसैव महाबलः ।
बलाराति रिवोद्दण्डं द्विड्वर्ग निजघान सः ॥३३॥

एकनैव युगांशेन द्वात्रिंशद्दुर्ग भूमयः ।
विजिता शत्रुत स्तेन तेन तेने परं यशः ॥३४॥

वैरि भटा स्तत्पुरतः स्थातुं नालं यदा तदा निर्यातुम् ।
रणभूमे रुद्युक्ता भीताः किं वा कुर्युर्दैन्य परीताः ॥३५॥

मानापमान चिन्तायाः पात्रीभूय महामनाः ।
मालापुरं समाक्रम्य रङ्कयामास तत्प्रियम् ॥३६॥

मानसिंहोऽपि नाशक्नोत् तेन योद्धुं कथं चन ।
अन्येषां तर्हि वीराणां का कथा मित तेजसाम् ॥३७॥

तत्र स्थाने यवनसेना ऽतीव परास्ति मवाप्य हीनोत्साहा समनोदाहा पलायन मन्तरा निरस्तान्योपाया समभूत् । विजयशालिनी महाराजपताकिनी प्रावृषि मालिनीव महावेगा स्वच्छन्दमग्रतः प्रसरन्तीदृढ़मूलानपि समधिगतानहितगणान् समुन्मूलन्ती नितरां विरेजे । प्रतापप्रताप भानूदयेन विद्वेषि कौशिका कान्दिशीकतां प्रकटयन्तः परमं विषाद मासेदुः । क्षत्रियवीराणां चोत्साहः स प्रवाहः समुज्जजृम्भे । प्रत्यर्थि जन जन्य संताप संतप्ता वीरजननभूमिः सामेदपाटभूमिः प्रमीत रिपु काय निकाय निःसृत प्रसृत शोणिता सारसं तृप्तासती भृशंप्रससादेव ।

ततः प्रस्थायाथो विजय कमला लालितबलः
प्रतापी भूमीशः प्रमथित मदान्धाऽहित बलः ।
समानं तं मानं पुनरपि विमानं कलयितुं
मतिं चक्रे धीरः प्रमुदितमनाः संगरपरः ॥३८॥

अम्बर राष्ट्रान्तर्गतं धनधान्यादिसमन्वितं व्यापारिक लोकभूयिष्ठं तन्नत्य सर्व नगरापेक्षया परमप्रतिष्ठं मानसिंह पितृ व्याधिपालं महाविशालं व्योमचुम्बि चन्द्रशालं निरवद्यहृद्य रूपसम्पन्नयोषिन्मालं कुमारायमाण बालं नानाविध रत्न दीधिति चमत्कृत गवाक्ष जालं,विचित्र चित्र रामणीय कोपहसित सुरपुरं तत्पुरं निशामे कामुषित्वा स्वच्छं यथेच्छं वसुजातं मुषित्वा ससेनःमेटपाटेनः सुबन्धुरं स्वमुदयपुरं पुरं विजेतुं तत्र स्थितं चप्रतिभटगणांशमन सदनं प्रति प्रहेतुं प्रस्थितोबभूव । तत्र च यावन्तोऽपियुयुत्सवः शत्रवः—

सम्भूय सम्भूय भटा महाशठाः स्तत्र स्थिताःप्रोन्नतगर्वधारिणः ।
वैरायमाणस्य समागुरग्रतः ते हन्त मङ्क्ष्वेव विभिन्नतां गताः ॥३९॥

अथं परवृतान्त परिज्ञान तत्परेण केनाऽपि गुप्तचरेण ततः पूर्व मेवोदयपुर मुपेत्य सविस्तरं तदागमन सूचनाऽदायि यतः श्रुत विजय शालिमहाराण प्रतापसिंहागमन समाचारः ससैन्य परिवारः स्वप्राण रक्षाभिलाषी महाविलासी सुकृत वहिष्कृतः पात्रेसमित लोकनमस्कृतःसंरेचितक्षणं तत्क्षणं महातङ्कया जीवनव्ययशङ्कया स्वयमेवोदयपुर भुवं विहाय महामाय पादशायानुमतो दिल्लीं प्रतिगतः ।

म्लेच्छ सैन्ये गतेतस्मिँ स्तत्रत्याः सर्वमानवः ।
प्रसेदु र्नितरां हन्त कञ्जानीव निशात्यये ॥४०॥

को जानाति कदा कस्य कादशा भाविनी भवे ।
यदधीनं जगचक्रं सएवाखिलविद्व विभुः ॥४१॥

असारं भुवनं मन्ये सारं किञ्चिदिवस्फुटम् ।
अत्राऽपि यदबलाल्लोकेविलोकेचित्रसंस्थितिम् ॥४२॥

आयाति राजा विजयी सुभानः सत्यव्रतः खण्डित मानमानः ।
विध्वंसयन् वैरिगणं समन्ताद् दिष्टया ससेनः स्वपुरं पुरस्तात् ॥४३॥
आकर्णय पौरा इति सातिहर्षाः सामर्थ्य सम्पादित दानवर्षाः ।
तत्स्वागत व्यापृति सावधानाः संगीत गीतेशयशो वितानाः ॥४४॥

सर्वत्र सर्वेऽपि जनामहाधनाः
सम्माननीयाश्च तदन्य व्यक्तयः ।
जातास्तदाऽ लोकिक कौतुकाऽ ऽकुलाः
स्वीयेष्ट सिद्धौहि मुदास्तिवाऽतुला ॥४५॥

आनन्द प्रफुल्ल वदनै र्महाजनैः प्रयुक्ताः स्वामिभक्ताः प्रसन्नचित्तताधरा महत्तराग्रेसराः प्रति संसरणं प्रकटित मन्दगीत रणं संमाजयांबभूवुः । दार्तिका दृतिद्वारा पातित वारिधाराः प्रतिप्रतोलिमार्गं मार्गंमार्गं चिरकालतो रूक्षित मपि समुक्षितं चक्रुः । करण्डक धृतमाल्या गतप्रायबाल्याः सविन्दुक भालिकाः काश्चन मालिका राजमार्गं विगाह्य विगाह्य नानाविधानिमनोज्ञानि मनोज्ञानि सौरभगर्भाणि

पुष्पाणि विक्रीणतेस्म । केचन सुमनसःसुमनसं संजग्रन्थिरे तथापरे केचित् प्रतिद्वारं तूर्णं तूर्णं सरस रसाल साळपल्लव वन्दन मालिका मालिका बध्नन्तिस्म । अथापरे केचिद्दुरारोहणं तोरणं सरसकदलीदल माकन्द किसलय वृन्दधामभिः सुमनोदामभि रलंकृत्य सुन्दर स्थूलाङ्कुरो त्कीलित फलक पटलान्वितं विधाय मङ्गलहेतुभिः पट्टदुगूल केतुभि र्विशेषयन्तिस्म ।

पण्यवीथिकाश्चाऽपि सानन्दैः स्वनृपाभिनन्दैः प्रशस्तकृत्यैः तत्रत्यैःसुमङ्गल-गीतिकोच्चारिभिः सद्व्यापारिभिः परस्परं स्पर्द्धयेव नानादिव्यवर्णैरलङ्करणै रलङ्कृत्य परमां सश्रीकतां लम्भिताः कैश्चिद्राजमनोनुसारिभिः तत्पूर्वकर्म-चारिभिश्च प्रचोदिता भृत्या विचित्र चित्रावलि भूषितमपि यवनजनवास दूषितं सम्मार्जनपुरःसरं पातकव्रात व्याघात समर्थैः प्रणतमनोरथसाधनाकुशलैरतिविमलैः श्रीगङ्गाजलैः शोधयामासुः ।

दिव्याम्बराऽऽभूषण भूषिताङ्गाः सम्भूय बाला सुमनोज्ञबालाः ।
स्वस्वामि सुस्वागतगीतिरीतिं संस्तोतुमभ्यासमहो वितेनुः ॥४६॥
राजदर्शनाहित बहु लोभाः पुरवनिताश्चोरित रति शोभाः ।
अट्टगवाक्ष समाश्रिता देहाः संजाता मुखविधु सन्देहाः ॥४७॥
कुमार क्रीड नोल्लासा विबुध व्रातसंकुला ।
गन्धर्व गीत भूयिष्ठा बभौ द्यौरिव सापुरी ॥४८॥
दूर्वा क्षत श्रीफलवस्तु पाणयः साम्नाय पाठा दुरित प्रहाणयः ।
केचिद्द्विजा गोपुर भूमिसंस्था श्चक्रुर्नृ पस्वागत मिद्धसंस्था ॥४९॥

अनेकरत्नावलि खचित कुथ विभ्राजं सुवर्ण पत्र निचिताम्बर बारीच्छायो च्छायं सुविशालकायं सुवर्ण शकलखचितोन्नताग्रदन्त युगलं सुरेन्द्रवाहनं नागेन्द्रमिव महाबलं सिन्दूरचर्चित भालं गण्डस्थलशोभित विचित्र विन्दु जालंदान्तबलं समध्या-सीनं पद्मोनं वा सपत्ननागावध्वंस कर्म्मलीनं महामहिमानं निजराजानं च तृषिताभ्या-मिव लोचनाभ्यांनिपीय हर्षभर भरित मानसाः पुरपुरुषाः कृतपुष्पवृष्टयः कलितजय घोषसृष्टयःसमन्तादुपेत्य यथोचितं तं नगरोपकण्ठे तस्थिवासं विपुलांसं सम्भावयामासुः मङ्गलपाठ मुखरमुखैः क्षितिदेव प्रमुखैश्च विघ्ननायक विनायक स्तवन पूर्वक नवग्रहा-नुग्रह लब्धि विधिं यथाविधि विधाय प्रणतितति सहितां दारिद्रय विद्रावण शक्ति सहितां सुवृत्तिसम्पादन दक्षिणां दक्षिणां ततः संप्राप्य तत्कृते प्रयुक्तैः, अविकुण्ठकण्ठैः साल्हादैः शुभाशीर्वादैर्दिगन्तरा ण्यपि वधिरीकृतानीव । ततः परं प्रमोद विकसिताननाः अन्येच पौरजनाः साष्टाङ्गं प्रणम्य, वयं विनिता इवाभूवम् ।

ततःस्वजातिसम्मानविधायिन स्तदनुयायिन श्चाऽपि वीरा यथास्वं पौरैः सत्कृता स्तानपितेसम्मानसूचकै र्वचनैः सन्तोषयामासुः । महाराजोऽपि शिष्टाचारनिपुणः प्रणतसमाश्वासनप्रवणः कुशलप्रश्नपूर्वकं सर्वानपितान् स्वागतकरान् यथायथं समुचित पारितोषिकदानादिना सोपाधिना हर्षयामास । अथ—

सवाद्यगानं समहाप्रतापः प्रतापसिंहो हृतदेशतापः ।
येनाऽपि मार्गेण पुरेप्रयातः किं नाभवत्तत्र सुपुष्प पातः ॥५०॥
तद्दर्शनो त्कण्ठित मानसाभिः स्वाट्टालिका जालक संस्थिताभिः ।
गच्छन्नधस्तुङ्ग करीन्द्रसादी पुष्प प्रपातै र्विहितः प्रसादी ॥५१॥
अलङ्कृति व्यापृति लग्नचित्तां जगाद काचित् निजरूपमत्ताम् ।
सौन्दर्य्य सम्पत्ति गुणावतारं पश्येर्वयस्ये भटलोकसारम् ॥५२॥

अयमिह निजभूमे र्भव्यकामो दयालुः
सहित विपुलकष्टो माननीयोऽरिभालुः ।
रविकुलमणि राराद्याति पुण्यस्वरूपः
परम विजयशाली पश्यचैनं त्वमालि ॥५३॥

स्वजातिगौरवं येन रक्षितंरिपुरक्षसः ।
तादृशः पुरुषस्यास्य दर्शनं पापनाशनम् ॥५४॥

ऐदंयुगीनो ननु रामएष म्लेच्छ क्षपाटो न्मथनप्रवीणः ।
त्वया सखिश्रेयसि जागरूकः सतां विलोक्यो हित भावनाय ॥५५॥

रामश्चतुर्दश युगांशक संमितं स
कालंस्वतात वचनाद्व वन मध्युवास ।
एषोऽत्र विंशतिसमाः सखिकाननेषु
विद्विडविनाशन परः कृतवान् निवासम् ॥५६॥

आर्य्य जाति रनेनैव नर व्याघ्रेण सांप्रतम् ।
विपक्षा घात भुग्नाऽपि श्वसितीव भुवस्तले ॥५७॥

गायन्ति बालाः परितः सुकण्ठं विक्रान्ति भाजोऽस्यपरं चरित्रम् ।
पश्येः कथं सम्मद शालिचित्ताः सदागमे के न भवन्ति तुष्टाः ॥५८॥

यथाक्रमं बन्धु जनानुयातः पितेव शूरः कृत वैरिघातः।
अमुष्य सूनुः सुबल प्रधानः सैषोऽग्रतोयात्यमराभिधानः ॥५९॥
सौम्याकृतिः सुन्दरवीरवेशः करालकौक्षेयक पाणिरेषः।
सम्पादिताऽऽननम्र जनाधिमानः श्रीशक्ति सिंहोऽपि विलोकनीयः ॥६०॥
एषोऽपि लोकोत्तर शक्ति शाली किं नालि वीरो धुतवैरिपाली।
कृतापराधोऽपि विनैव दण्डं म्लैच्छै विसृष्टो यदयं प्रचण्डः ॥६१॥
सवन्दिलोकै रभिनन्द्यमानः शूराग्रणी दर्शकसौख्यदानः।
सवाद्यगानं पुरमुख्यमार्गान् क्राम्यन् गतोहर्म्य मुपेतमार्गान् ॥६२॥
वाग्मीश्वरः कश्चन भट्टवर्यः संगीत साहित्य कला प्रवीणः।
आगत्य जिष्णुं तमुदारकीर्तिं सवीर वृत्तं मुदितो नुनाव ॥६३॥
धर्मनिधान मान्य वरराजन् गुण सागरगोब्राह्मण भक्त।
जन्मभूमि रक्षाव्रतधारिन् सभ्यजातिगौरव संसक्त।
म्लेच्छराज दुर्मद संहारिन् भारतरत्न सदोन्नतभाल।
जय जय स्रतौ प्रताप महोदय म हामहस्त्वंकीर्त्तनमाल ॥६४॥
अतुलकीर्तिशालिन राजेन्द्र त्वं वहुदिव्य गुणावलिधाम।
जागर्सीह सूर्य्यकुलदीपक विजय शील विधि निर्विश्राम॥
आर्य्यजाति रयिवीरधुरीण त्वयाऽरक्षि संप्रतिकिंनैव।
तावक यशोगान मिह विज्ञाः करिष्यन्ति तन्मुदासदैव ॥६५॥
साँय् साँय् गतिकः करवालो महाकराल स्तेभूपाल।
कालमुखः सकटाकटघातं प्रतिभट पटलं मायिककालः॥
कर्त्त कर्त्त संगर भूमौ क्षिपन् समन्तात् किन्नोनाथ।
भूभारं लघय न्नपिगुरुतां नयसि च तां प्रविततगुणगाथ ॥६७॥
इत्येवं कविना यथार्थ बचनैः स्तुत्यःस्तुतो भूमिप
स्तेनोदारमति र्विचित्रगुणको दृष्टो न हृष्टोमनाक्।
तं च प्राज्यधन प्रदान विधिना सन्त्योष्य तोषंगतः
स्तादृक्षः पुरुषो हि सज्जनमनस्तुष्टौ विधत्तेमुदम् ॥६८॥
इति प्रताप चम्पू काव्ये विजयवर्णनानवमो निश्वासः।

# अथ दशमो निश्वासः

अरि षड्वर्ग गर्व संहारी सदा शान्ति कानन संचारी।
जयति यदीयो भुवनेदासः सोऽवतु भवो भवं लयलासः ॥१॥
गुरु जन मन्त्रिलोक सम्मत्या भव्यविचारः परप्रसत्या।
उदयपुरं चक्रे नृपधानीं कृतवान् रिपु यत्र बहुहानीम् ॥२॥

उदयपुरमपि सुरपुरमिव सम्पन्न श्रीकं सत्पूर्वापेक्षया व्यतिशयितां लोचन-लोभनीयां श्रियं दधार। तत्रचतत्तकर्मचारुभिः कारुभिः क्षिप्रमेव संपादितामहाजन विश्रामहिता मनःप्रसादाः प्रासादाः कलितानि तथा कल्पकल्पपादपानि नानाविध पुष्प वल्लि बलितानि उद्यानानि सज्जीकृत स्फटिकसोपानानि सुदृढ़शिला शकल मय कुड्यविस्तारा महागभीराः सर्वतु पर्याप्तविमलनीरा सुदीर्घिकाः कारिता अन्तपुरं समया च समारोपितानिनैकसुमनःपरीतानि मनोज्ञानि प्रमदावनानि।

सेवन्ती शतपुष्पी माला मदयन्ती मालती विशाला।
वासन्ती सिद्धेश्वरजालं यथाकाल माभात्तत्राऽलम् ॥ ३ ॥
तिलक केत कीवा मुचुकुन्दः स्वर्ण केतकी वकुलः कुन्दः।
पुन्नागो बन्धूकश्चैव प्राभात्समयेतत्रतथैव ॥ ४ ॥

अथ सकल बाध विनिर्मुक्ते यथोचितव्यवस्थितिसंयुक्तेस्तुत्येमहाराजाधिपत्ये विद्यमाना निजेनिजे कर्त्तव्येकर्त्तव्येसावधानाः कृताविनयनिवृत्तयः सद्वृत्तयः समस्ता अर्पितत्रत्याः सभृत्याः प्रकृतयःसानन्दं कालं यापयामासुः। परवशाकालीन व्यली-कानुभवानन्तरं जायमानं साधिमानं तदानीं तनं सुखमपि तासां समासां प्रायोवर्ण-नातीतमेवासीत्।

तदानीं च विदितमहाराज प्रगतिना यवनभूमिपतिनाप्यजयमेरु चित्रकूटमण्डल गढ़ाभिधेयानि तदधीनचराणि दुर्गस्थानानि विहायसर्वतएवतत्स्थानान्तरतः स्वसैन्यानि निर्गमितानि।

कृत प्रशस्त विजयलाभोऽपि समेदपाटेश्वरः सत्यसन्धप्रवरः पर्याप्त धनधान्य सैन्य संग्रहाभावात्तदानीं स्वपूर्वजराजधानीं चित्रकूटावनींयत् स्वायत्तीकर्तुं नप्रबभूव तदेकान्ते तत्प्रतिज्ञापूर्ति वैकल्याद् वीतरागः सन्यासीव एकान्तवासप्रियतां प्रपेदे।

पिशोला सरोवरतटे च कुटीरकाणि निर्माप्य तत्रैव निवसन् यथासमयं प्रकृतिसम्बन्धि कार्यविचक्षणं च कुर्वन्स्वजन्मभुवः समुद्धार चिन्तामग्नो यथाकथमपि समयं यापयमास।

सत्य प्रतिज्ञं भुवनैकवीरं स्वजन्म भूद्धारविधौ सुधीरम्।
परेऽपितं त्यागिवरं महेच्छं सधन्यवादं प्रशशंसुरच्छम् ॥५॥

तस्य महात्मनस्तथाविधं कठोरव्रतं स्वदेशानुरागं विषय भोग विरागं निर्मायं लोकोत्तराध्यवसायं परिज्ञाय महामत्सरोऽपि सोऽकबरः सद्भाव मापन्न इव ततः परं नमनागपि तदनिष्ट विधानेरुचिं बबन्ध। मानसिंहादयोऽपि तस्य विरोधिनः सदाम्लेच्छराजमतानुमोदिन स्तन्नैसर्गिक वीरतादि गुणैः बिजितालज्जिता इव स्वयमेव तत्र विनम्रीबभूवुः। अथो "अत्युग्र पापपुण्यानामिहैवफलमश्नुते' इतिवचनंप्रमाणयन्निव विधिर्निष्कारणमेव मेदपाटेश्वरस्य तस्य कृतेदत्तबहुपीड़ं गुप्तप्रयोगकृतपरङ्गनासतीत्वव्रतविनाशेऽपि नांश्रितव्रोड़ं प्रपञ्चरचन प्रवरं यवनेश्वरं बहुशक्ति सनाथमपितं दिल्ली नाथं प्रतिपरांमुखीबभूव यत्—

समन्ता च्छत्रवस्तस्य प्रादुर्भूय महोत्कटाः।
तद्दुष्कृत्यव्यतीहार प्रदाने प्रभवोऽभवन् ॥ ६ ॥

एकस्तस्यकन्धार परिवारीमिर्जा महम्मद पदाधिकारी संग्राम काननविहारी परोन्न यमात्सर्यधारीप्रवलबलः शात्रव संमुख निश्चलः समधिगतसकलयुद्धकलः प्रकटितपञ्चाम्बु प्रदेशापहारलक्षो विपक्षो जनिष्ट। महामहस्विनो मनस्विनो दाक्षिणात्या वाङ्गाश्चाऽपिकेचन तस्य प्रान्तावरोधिनो विरोधिनोऽभवन् तदा क्रमणवश च प्रथितकूटनीतिः प्रतिक्षणंसभीतिः जलान्तर्गतोमीन इव दिल्लीनः सोऽननुभूतपूर्वा मेवकामपि शोच्यांदशाँजगाहे। अथ शत्रूत्पात भयरहितोऽपि समनुकूल साधन सहितोऽपि सत्यसन्धः समभ्यस्त स्वपूर्वजेतिबृत्तनिबन्धः समेदपाटभूमीन्द्रश्चित्रकूट प्राप्तेरभावान्महाविषाद परीतचित्त इव प्रत्यहं तनुतनुतांततान, यथावसरं च प्रपन्नो यतीव विविक्तं कुटीरकमध्यासीनः स्वात्म प्रतिपत्तिलब्धिसंलीनः, जन्मनागुणैश्च ज्येष्ठं सर्वजनप्रेष्ठं विदितराजनयं स्वतनयं राज्यसंचालनकर्मकर्मठं निश्चिकाय स्वविचारं च परिचाययांबभूव कदाचित्ससामन्तमण्डलं सचिववर्गम्—

हितैषिणो मे कृतिनोध्रियन्ते भवादृशा यस्य महानुभावाः।
तस्यापि हा हन्त मनः प्रशान्ति नोपैति यत्तदुर दृष्ट दोषः ॥७॥

मज्जन्मेड़ा भुवन विदिता चित्रकूटाभिधाना ।
नाना पापप्रथनपटुभिः शत्रुभिः क्लेश्यमाना ।
मत्सत्ताया मपि वतभवेन्नैव यच्छान्ति धाम ।
धाम व्याप्तान्वयजनिरहं निन्दनीयोऽस्मिनाम ॥८॥

संप्रति मामकीनं चेतःसंसृतिविषयविरक्तं भगवति भवे संसक्तं बुभूषति । स एवरक्षःकुलविनाशकेतुः सकलाधिव्याधि निवृत्तिहेतुःशान्ति कामुकमुनि जनसंपादितसेवः सकल देवदेवः प्रणतवत्सलः कल्याणदानलसद्बलःसमाश्रयितव्योऽस्ति तदयं सम्यगनभ्यस्तराजनीतिः संकलित प्रजाजनप्रीतिः प्रादुर्भूत प्रौढ़ाऽवस्थः दृष्टराज्यव्यवस्थः सकलाप्तप्रेष्ठःमेज्येष्ठःकुमारोभवद्भिः संमन्त्र्य युवराज कर्मणिनियुक्तीकृत्यमत्कार्य्यभारः स्वल्पीकरणीयः यतोऽहंनिश्चिन्तीभूय शान्तिलाभाययत्नपरोभवेयमिति ।

सत्याजानः प्रगुण गुण भाक् साधुमान्यो वदान्यः
श्रीमान्मन्त्रिप्रभृति भिरथोमोदितःसंमतेन ।
भूमीजानिः प्रकृति विधये कृत्यदक्षानसदक्षान्
संभारान् संकलयितु मरं किङ्करा नादिदेश ॥९॥

अथ यथाविधानं यौवराज्यकर्मणि समभिषिक्तं महाविविक्तं महार्घरत्नावलिवलितं लसत्प्रभचामीकराकलितं सिंहासनमध्यमध्यासीनं बहुमूल्यवसनाभरणैरहीनं वीरतादि गुणगणयुक्तं दुर्व्यसन व्यासक्ति विमुक्तं लोकोत्तरधामानं तममरसिंहनामानं समादेष्टुमारेभे ।

सेव्यः सदा सभगवान् समलोकनाथः सश्रद्ध मानतजन व्यसन प्रमाथः ।
हेवत्स ! तेनिगमवृन्द सुगीत कीर्त्तिः,कल्याणमूर्ति रुमयासासहितः पुरेतिः॥१०
मागाः प्रमादमयि पुत्रक कर्मणि स्वे गोविप्ररक्षणपरो भव वीततन्द्रः ।
कुर्य्यास्तथाऽनुदिवसं निजवान्धवेषु निर्गर्व मागमपटो ! प्रणयप्रवृत्तिम् ॥११॥
संपालयेश्च जनताः सुतनिर्विशेषं, दारेषुयुक्तविधिनारचयेः प्रसक्तिम् ।
उद्धर्त्तु मिच्छजनि भूमिमथो सुवृत्त्या पूज्येषु संकलय भक्तिमपीच्यरूपाम् ॥१२
राजश्रियं समुपगम्य नवा कदाचिद स्यास्थिरत्वमवगच्छ तडित्प्रभायाः ।
उत्कर्षशालिनि महोद्यम भाजि रागंधत्ते सदेयमिति निश्चिनुयाः सुबुद्धे ॥१३॥

विद्याप्रमादिनमिवा यतिरापदांसंशीलंकुसङ्गरसिकं व कुमार शीघ्रम् ।
दुर्नीतिकं महिभृतं सुचलस्वभावा श्रीस्तातमुञ्चतियतःशुभवृत्तकान्ता ॥१४॥
शक्तोऽपि जातु परपीडन भावनायां, लोभादिकारणवशान्न रुचिं विधेहि ।
तत्पीडनोत्थमपि पातकजात माशु तत्कर्तृवंशमपि हन्तु मलंभविष्णु ॥१५॥
उद्दण्डशात्रव विनीति कृते यथास्वं यत्नं तनुष्व गुरुलोक कृतानुमोदः ।
तेषां विनिग्रहफलं जनताप्रसक्तिस्तस्याश्चकीर्तिरतुलासुकृतंचतस्याः ॥१६॥
स्वाध्याय सम्पदि सदा भवसावधानः सद्बोध भावन रुचिः सुकृतप्रधानः ।
सत्सङ्गतीकृतमनाःसुविचार शाली कुर्य्याश्चदुर्जन समागम संजिहीर्षाम् ॥१७॥
येशत्रवः खलु सदा तवजन्म भूमेः शोच्यांदशां विदधते कुटिल स्वभावाः ।
तेषां मदक्षयकृते कृतिनामयेव यत्नस्त्वयाऽपि सततंनन संविधेयः ॥१८॥
त्वत्तो विभीय ननुयः कुनयावतारः सौम्य प्रधावनपरोऽजनिते ऽरिवारः ।
स्वप्नेऽपि तत्रमतिमन् नहि वाविधेया विश्रम्भधीः कुटिलताऽस्य तथाऽनुमेया १९

विरोधिनो हि प्रायोभुजगा इव छिद्रानुसारिणो ऽनिष्टकारिणो दूरत एव परिहेयाः ये मूढधियः पूर्वविरोधिना नहितान्मित्रत्वमुपगतानवगम्य तत्रविश्वसन्ति समुपबृंहितबलै स्तै रेवते यथावसरंव्यापाद्यन्ते अतः सदैवतद्विषयेकल्याणकामैः प्रतीष्ट साधु परिणामैः प्रतिज्ञातदुर्भावप्रत्यर्थिहानिभि भूमी जानिभिः सावधानैर्भाव्यम् । प्रायेणसुव्यवस्था अपिवयस्थाभूपाला अभिनवाधिकार मदोन्मत्ताःकुसंगवशाद् दुर्व्यसनेषु रुचिंदधानाः कर्त्तव्याकर्त्तव्यविवेचनतो विरतिं विदधानाः, चेतोरञ्जनाय गणिकाविटांश्च संगृह्य कर्त्तव्यपराङ्मुखाः सन्तोऽप्यसन्त इवहितैषिणोऽपि गुरुलोकान् स्वार्थसिद्धि प्रत्यूहरूपानव गत्य परिणाम रम्याण्यपितदीयादेशवचांसि भूयोभूयस्तिरस्कृत्यस्वेच्छाचारिणोभूत्वाऽनर्थपरम्परांभजन्ते । केचन"यथाराजातथाप्रजा"इतिवृद्धोक्तिं प्रमाणयितुमिव तदनुरूपमेवतत्प्रसक्तिकृतेव्यवहरन्तः किमत्याहितंनापादयन्ति स्वेच्छाचारिणो राजकर्मचारिणश्च स्वार्थोपपत्तयेनानाविधैदुरुपायैः प्रकृतिमण्डलं निःशङ्कमेवोत्पीडयन्ति तथासति राष्ट्रहितचिन्तका अपि सुवृत्तयः सचिवप्रभृतयस्त त्प्रतिकूलं जनहितं कर्त्तुमपारयन्तःशनैःशनैः स्वकर्मतो विसृष्टिं लभन्तेयेनाऽन्ते दुर्व्यसनिनो राज्ञो भोगसामग्री पूर्त्त्यर्थंप्रसह्यास्यर्थंदण्ड्यमानाःसन्तोविमनायन्तेजनाःतदानींचावसर प्रतीक्षा विहित तत्सार परीक्षा स्तस्या रातयः सहसैवतन्मण्डलमाक्रम्यतद्वशीकारे प्रभवन्ति ।

अतः सुखमिच्छता भूमिभृता दुर्व्यसनजातंविषमिवसर्वथाऽपि परिहेयंविशदयशसेपुण्यकृते च मनोदेयम्।

देशे स्वके शुभकलां जनलाभहेतोरुन्नेतु महसि तरां गुणिलोकयोगाद्व ।
वैदेशिका नहि निजव्यवहार हानिं कुर्यु र्यथा कुरु तथा हुत संविधानम् ॥२०॥
लोकानुराग सहितः कुलभूमिपालः, संभोक्तुमर्हति मुदा महनीयभोगान ।
तस्थं तदीयहित कर्मणिजागरूकः, सोदर्य्यवर्गवलितो भवमङ्गलाय ॥२१॥
दानेन मानेन भटाश्चतोष्याः सदात्वया संगर लब्धवर्णाः ।
तुष्टाहि ते दुर्मदवैरिनाशे लोकोत्तरं पौरुष मारभन्ते ॥२२॥
यैः सज्जनैः शौर्य्य धनैर्विपत्तौ सहायताऽदायिभृशंकृतेनः ।
तेषां स्वदेशावन मानसानां यथायथंतेऽपिचिति र्विधेया ॥२३॥

अतःपूर्वमदुर्भाग्यवशाद्बहुकालंयावद्युष्माभिरपि नानाविधानिदुःखानिसोढानि संप्रति भगवतश्चन्द्र चूडस्य करुणा रसात्पुनरपि सुखायभोगावसरोलब्धः। घनान्धकारे दीपदर्शनमिव कष्टानुभवान्तरं जायमानमेव सुखंनितराँशोभते तत्तदनु भूतावेव कर्त्तव्यं विस्मृत्य कालो नयापनीयः किन्तुतत्परिशीलनपुरःसरं स्वदेशोऽपि व्यवस्थापनीयः। इत्येवमे त्वाँ प्रत्यादेशः इतिव्याहृत्यविरामभाजि, हिन्दु सम्राजिनिटिलतटन्यस्ताँजलिपुटो युवराजओमित्युक्त्यातच्चेतस्तोषयामास--

ततः परं भूपतिदत्तसंज्ञः शास्त्राभिसन्धान विशिष्टदृष्टिः ।
वाग्मीश्वरो मन्त्रिवरोऽपि तद्वत् कुमारमादेष्टु मथप्रवृत्तः ॥२४॥

अयियुवराज यद्यपि महाराज एवत्रिवर्गपारीणः सकल सवितृ वंश्य राजधुरीणः समस्त शास्त्रसार भूतं प्रसन्नपदगर्भं सन्दर्भं समभिव्यक्तीकृत्य तत्रभवन्त मायुष्मन्तंलोकद्वयेऽपि हितसम्पादनदक्षिणं शिक्षणं व्यधात्। तथाऽपितदनुमतस्त्वच्छ्रेयः सम्भावनानिरतो यथामति यथानुभवं च तदुक्तार्थमेव भाष्यरूपेणवाक् प्रपञ्चेन विस्पष्टयितु मुद्युक्तोऽस्मि। तदत्रविवेकवता भवता दीयमानमवधानं सनिर्बन्धं याचे आशासे च वक्तृविशेषनिः स्पृहो गुण गृध्नो भवान्मद्वचःसार मपि कर्ण शुक्तिकया निपीय सफलयिष्यति मदध्यवसायमिति। गुणगणामत्र ? राजपुत्र ? "वीरभोग्यावसुन्धरेति" नयविदांसिद्धान्तं प्रमाणीकृत्यपूर्वंबलसम्पत्तिकृतेप्रयतितव्यम्—

प्रेष्ठ ? पुण्य भूमिरियं यत्रभवज्जनिरजनि यस्याञ्चभवान् स्वर्मुर्वः पाक शासनं इव-शासकः संवृत्तः पुण्यवानेव तस्या अस्यावसुन्धराया अधिपतिःशोभते सएवभूमिपोऽत्र

प्रशंसनीयो भवितुमर्हति यस्यराज्येकाष्ठर्यंभल्लेषु न जनानां चरितेषु करुणध्वनिर्विरोध प्रतीतिश्चकाव्यबन्धेषु न पर पीडित बान्धवेषु निपातवर्चाव्याकरण ग्रन्थेषु नजानपदेषु कौटिल्यंनेत्रंविकूणितेषु नपारस्परिकव्यापारेषु भङ्गप्रसंगो भ्रूवल्लरीषु न मिथः सद्व्यव हारेषु वर्णसङ्करता देवदीपेषु नद्विजन्मादि पदवाच्येषु ।

अयि सूर्य्यकुलप्रदीप ? नवमेदपाट महीप ? यशएवजन्मफल मात्मवतां महीभृतां तत्तदेव सदाकाङ्क्षणीय मायुष्मता भवताऽपि यतोऽयं लोको ऽन्यगुणविशिष्टमपि यशोरहितंपुरुषंनमानयतियशोलब्धिश्च सत्पात्रेषुसमुचित द्रव्य प्रतिपादनान् साधीयसीस्यात् "संग्रहैकपरः प्रायः समुद्रोऽपि रसातले" इतिवृद्धोक्तौरदातुः कदाचिदपियशः प्राप्तिर्नभवितुमर्हति अतोदान शौण्डेन भाव्यंसुश्लोकं कामयमानेन भवता सदासद्भिः-संगन्तव्यंसतांसमागमोऽपिविनय सम्पत्ति मपेक्षते विनीता हि सज्जनानां स्नेह-भाजनतां बिभ्रति विनयश्च जितेन्द्रियत्त्व कारणको दृष्टः अजितेन्द्रिया हि अविनीताः सन्तोऽवद्यकर्माणो भवन्तितेचविनयैक साध्यगुण प्रकर्ष मन्तराऽपयशो भाजनता मुपेत्य महाव्यसनानि लभन्ते अतोयथोक्त फलावाप्तये समुचितसाधन शालिना भवितव्यम्, महामहिमवताऽऽ युष्मता ऽत्र भवता अन्यच्चापिविज्ञेयम् यो बिक्रमपरशु निःशेषिता रिचक्रवालः समस्तवर्णाश्रम धर्मपरिपालन यापितकालः आचार्य्यः शिष्यानिव लोकान् विनीतान् विदधातितदग्रगुणा नपनिनीषुरेव सत्यपराधेऽपितानुचितमेवदण्डयति तत एव विभ्यतितरां महाबला अपि सम्पन्नसन्दोहाः तस्मायेषास्निह्यति दिव्याम्बरा पतिम्बरा वरेव सागराम्बरा स्वयमेव—

चित्तेयदीये सुकृतं सदाश्रितं त्यागः करे सत्यवचो मुखेतथा ।
श्रुतं श्रुतौ प्राज्ञवरैः समीरितं धन्यः स एवास्ति महीतले नृपः ॥२५॥
दयामयो यः प्रयतो ऽनुवेलं प्रजागणं रक्षति वीत खेलम् ।
सभूमिपालो विदितारिचालो, भोगान् समस्तान् भजतेऽ रिकालः ॥२६॥
देवेन्द्रकल्पोऽपि नरेन्द्रनन्दनः, क्षौणीपतिः कर्त्तुमलं न केवलः ।
राज्य व्यवस्थामितितेन मन्त्रिणः, संरक्षणीयाः सुधियोहितैषिणः ॥२७॥
सद्वंशजाः सुकृतिनः कृतिनोऽस्त दोषाः
षाड्गुण्य योजनचणाः कृपणार्ति मोषाः ।
विस्पष्ट सम्मति विधान निधान भूता
सेवन्तुतेऽविषयिणः सचिवाः सदूताः ॥२८॥

आत्मोदयः परलयश्च यतोऽतिमात्रं जायेत सोम्य ? विबुधैर्नयतन्त्रविद्भिः।
व्याहारि नीति रियतीति विभाव्यचित्ते तामेव संश्रयसदाभिमत प्रसिद्ध्यै॥२९॥
नयविदां प्रवरो गुणिपुङ्गवः प्रवदतांधुरि कीर्तित कौशलः
तमुपदिश्य मिताक्षरसारवद्व विरति माप ततो युवराणुदम्॥३०॥

अथमेदपाटेश्वरो ऽमरसिंहनामानं ज्येष्ठात्मजं युवराजकर्मणिनियुज्यतदनुजाँश्च यथायोग्यं तत्तत्कर्मणि संस्थाप्या ऽलिङ्गेपि भगवत्येकलिङ्गे समाहितमनोवृत्ति र्निवृत्ति-मार्गेऽभिरुचिं कलयांबभूव।

पुत्रास्तस्य प्रथितमतयः शौर्य्य सम्पद्विशिष्टाः
शिष्टाचार प्रवणहृदयाः स्नेहभाजो मिथस्ते।
ख्याताः सप्ताधिकृदशतया कीर्तिमन्तोऽनुवृत्त्या
केषांनाऽऽसन् प्रणयजननाः साधुचर्य्याःसदर्य्याः॥३१॥
प्रजास्तथा तद्व्यवहार शालिनां नृप त्मजाना मवलोक्य सङ्गतिम्।
तदानुकूल्योहित भव्यसम्पदः स्वयं न किंतद्वशतांप्रपेदिरे॥ ३२॥
विरोधिनो धर्मधनस्य भूपतेः प्रजानुरागा नुगुणव्यवस्थितिम्।
विलोक्य संजृम्भित भूरिभीतयः स्ततानुतापाः किमुनोऽभवन्मुहुः॥३३॥
यथा यथा तद्विषयव्यवस्थितिः प्रतापिनोऽ भूनयशालिनः शुभा।
तथातथैवारिकुलस्य संस्थितिर्बभूव तस्य व्यसन प्रसंगतः॥ ३४॥
कुबेरकाष्ठा श्रयभानुमानिव तथा ध्वरोद्बुद्धतनूनपादिव।
रराज राजात्मज आर्य्यनन्दनः सतत्पदस्थोजनताभिनन्दनः॥ ३५॥
दिने दिने सोऽथनरेन्द्रनन्दनः सवान्धवः स्वाश्रित चित्त रञ्जनः।
सपत्न बृन्दे प्रकृतौ तथात्मनः श्चकार नूनं सकृदेव संस्थितिम्॥ ३६॥
कुशीचरः सन्नपि पूर्णमण्डलः प्रभाव माहात्म्य परास्त द्विड्बलः।
महाबलो लोलुप शत्रुशातनः प्रतापसिंहो जनि शान्त शासनः॥ ३७॥
कुमारवान् भूधर भूमि संस्तरः सदुर्गको नाशित भक्त संगरः।
विभूति शाली विदितात्म गौरवः शिवोव भातिस्म स भूपुरन्दरः॥ ३८॥
विदुला इव वारि वेगतः श्रित कम्पा रिपवस्तरस्विनः।
नृपतेः प्रणिपात पूर्वकं पुरतः स्थातुमलंकिलाऽभवन्॥ ३९॥

विदुषां सदनेऽपिचञ्चला कमला मान्यत्रसन्निरन्तरम् ।
नृपभीतिमतीवशारदा वसतिं तन्निकटेऽपि नो जहौ ॥ ४० ॥
समयापुरमस्य भूभृतः सुरभूपांतथ भयाकुला इव ।
शरणार्थिन इद्धतेज सः किमु चक्रुर्नहि संस्थितिं सुखम् ॥ ४१ ॥
सगरान्वय एष भूमिपः स्तुतसन्धो रिपुपङ्क भावनः
इतिनैकवपुः पयोनिधिः किमु चक्रे विषयेऽस्य सुस्थितिम् ॥ ४२ ॥
कमलैर्वलितानि कम्बला न्यसंस्तत्र समानि नीवृति ।
भसलाः कृतसाधु गुञ्जनाः सुखयन्ति स्ममनश्च पश्यताम् ॥ ४३ ॥
समये समये सुरेश्वरः सुखवृष्टिं विततान सर्वतः ।
यदमुष्य सुयोग शालिन स्तदवैन्नैवजनो दरिद्रताम् ॥ ४४ ॥
निरतो गुणिलोक सत्कृतौ निकृतौ दुर्गुण शालिनां तथा ।
विदधे तरसैव राष्ट्रकं नयशाली धनधान्यपूरितम् ॥ ४५ ॥
कुलटा कुल मात्त विभ्रमं परिहायाऽस्य सुवंविरोधिनः ।
द्रुत मेत्य कुलं तदङ्गना अपि चक्रे निज कृतभावनाः ॥ ४६ ॥

अथ प्रशान्तबाधं समुचितनीति प्रकाशनं शासनं विदधानस्य मेदपाटनृपप्रधानस्यतस्य धनधान्यादि वर्त्तन साधन सम्पन्नाः संरक्षित सत्पापन्नविपन्नाः सुन्दर रूप प्रकृतयः प्रकृतयः परस्परंसाधु व्यवहरन्त्य दुर्गुणगणांश्च सर्वथापि संहरन्त्योऽमन्दमानन्द मनुभवन्त्योऽसमयं समयं यापयामासुः ।

रवि कुल मणि रेषख्यात कीर्ति र्जगत्या मुदय नृप तनूजः शात्रवोत्पात केतुः ।
निज जनि वसुधाया भव्दकामः कृपालुः सुकृत पथमुपेतः पालयामासलोकान् ४७

( काव्यकर्तृ परिचयः )

श्रीसुन्दरीगर्भकृतात्म लाभः श्रीमेदसिंहस्य सुतः कनीयान् ।
व्यधादिमां वीर मनोज्ञचम्पूं दिलीपदत्तः कविपादुरेणुः ॥४८॥

माघे गुरौ शुदि* दले तिथि पूर्णिमायां,
संवत्सरे रस वसु ग्रह चन्द्र (१९८६) संख्ये ।
श्रीमत्प्रताप नृपते र्विजय स्वरूपा,
चम्पूःसमाप्ति मगमद्ध भगवत्प्रसादात् ॥४९॥

---

* शु = शुक्लपक्ष दि = दिवस ।

## विज्ञप्ति

# चम्पू कार कृत अन्य पुस्तकें

१ श्री मुनिचरितामृतम् ( संस्कृतकाव्यम् ) श्री स्वामी दयानन्द जी का जीवन-च
मूल्य

२ संस्कृतालोक ४ भाग बिना गुरु के घर बैठे संस्कृत सीखने का एक मात्र उपाय मूल्य ।) प्रत्येक एक साथ लेने पर

साहित्याचार्य श्री पं० पद्मसिंह जी शर्मा (समालोचक शिरोमणि कृत) पुस्

१ बिहारी सतसई भूमिका भाग ( नवीन संस्करण )
२ ,, ,, भाष्य
३ पद्म पराग प्रथम भाग
४ ,, ,, द्वितीय भाग ( छप रहा है )
५ प्रबन्धमञ्जरी ( संस्कृत के उत्तम निबन्धों का संग्रह )

---

१ संस्कार चन्द्रिका ( नवीन संस्करण ) २।=

२ संस्कार चन्द्रिका के चुने हुए व्याख्यान सहित नामकरण, यज्ञोपवीत तथा विवाह संस्कार हाल ही में अलग छपाये हैं मूल्य क्रमशः ।) ।) ।=) है।

उपर्युक्त पुस्तकों के मिलने के पतेः—

( १ ) श्री पं० दिलीपदत्तजी शर्मा दतियाना,
पो० गन्धौर, ज़िला बिजनौर।

( २ ) मैनेजर काव्यकुटीर नायक नगला
पो० चांदपुर ज़िला बिजनौर।

( ३ ) श्री हरिदत्त शास्त्री, आचार्य महाविद्यालय,
पो० ज्वालापुर ( सहारनपुर )